# चन्दमामा

सम्पुटः - १७ डिसेम्बर् - २००० सञ्चिका - ९



## अन्तरङ्गम्

**कथाः**



## एतस्य अङ्कस्य विशेषाः



पुण्यस्य दानम्
(वेतालकथा)

रङ्गस्य कथा





अङ्गरक्षकः

भारत-
गौरव-
गाथा



Printed and Published by B. Viswanatha Reddi at B.N.K Press Pvt. Ltd., Chennai–600 026 on behalf of Chandamama India Limited, No.82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor: Viswam

Editor
VISWAM

Editorial Advisors
RUSKIN BOND
MANOJ DAS
Consultant Editor
K. RAMAKRISHNAN

**ALL CORRESPONDENCE TO:**

Chandamama Magazine
Division
New 82 (Old 92)
Defence Officers Colony
Ekkatuthangal
Chennai - 600 097
e-mail : chandamama@vsnl.com

**For USA**
**Single copy $2**
**Annual subscription $20**
***Mail remittances to***
**INDIA ABROAD**
**43 West 24th Street**
**New York, NY 10010**
**Tel: (212) 929-1727**
**Fax (212) 627-9503**



Our next issue is being planned as the Millennium issue, with a special feature on India - half century before Independence and half century afterwards. You will want to preserve your copy for years. A planner for 2001 will be an additional attraction, exclusively for SUBSCRIBERS. So, it's time to think of a regular subscription. Hurry with your payment by M.O./Bank draft.

*संस्थापकौ –*

**चक्रपाणिः नागिरेड्डी च**

# आप्रच्छनं ते वर्ष !

द्विसहस्रतमं वर्षं समाप्तिं गच्छत् अस्ति । तस्य आरम्भकाले महती चर्चा कोलाहलः च प्रवृत्तः । केचन अवदन् - तत् वर्षं नूतनस्य दशकस्य शतकस्य च प्रथमं वर्षम् इति । अन्ये केचन तस्य विरोधं कृतवन्तः । अन्ते एतावत् तु निर्णीतं यत् नूतनशतकस्य (सहस्रकस्य च) प्रथमः मासः अग्रिमा जनवरी एव इति ।

द्विसहस्रतमवर्षं तु अतीतप्रायम् । वयम् अग्रिमस्य शतकस्य (सहस्रकस्य वा) स्वागतं सहर्षं करवाम । तस्य पदचिह्नम् इतिहासपथे यथा स्पष्टतया दृश्येत तथा कर्तुम् अद्यैव प्रयत्नस्य आरम्भं करवाम । अग्रिमं शतकं सहस्रकं च सुखसमृद्धिदायकं भवतु इति आशंसनम् अपि करवाम ।

यदि गभीरतया चिन्त्यते तर्हि एकः अंशः स्पष्टः भवति - 'कालः न शुभः अशुभः वा' इति । कालस्य नास्ति वयः । कालः न द्विसहस्रवर्षमात्रपुरातनः । अनादेः अनन्तस्य च कालस्य गणना न केनापि कर्तुं शक्या । मानवाः वयम् अस्मन्मत्यनुसारं कालपरिमाणं निश्चितवन्तः । अतः नूतनं शतकं सहस्रकं वा सम्प्राप्तम् इत्यादिकं तु न वास्तविकम् । अतः नूतनं वर्षं शुभकरम् अशुभकरं वा भवति इत्येतत् अपि भ्रममूलम् एव । वयं यथा भावयामः तथा भवति कालः ।

नूतनं शतकं निमित्तीकृत्य वयं वैयक्तिकतया यथाशक्ति किमपि उत्तमकार्यकरणं यदि चिन्तयेम तर्हि नववर्षारम्भकालस्य सकुतूहलं प्रतीक्षा न अनुचिता ।

गतस्य वर्षस्य ये उत्तमाः अनुभवाः सन्ति तान् स्मरन्तः, गते वर्षे या नीतिः अधिगता तां मनसि आकलयन्तः वयं समाप्तिं गच्छत् वर्षम् उद्दिश्य आप्रच्छनवचनं वदाम ।



# वार्ताविषयाः बालाः

## अध्यक्षस्य आप्तसहायकः कश्चन बालः !!




ग्वाटेमालादेशस्य अध्यक्षस्य अल्फान्सो पोर्टिल्लो-वर्यस्य शिक्षण-परिसरादिविषयेषु आप्तमार्गदर्शकः कः इति किं भवन्तः जानन्ति ? सः अस्ति सेम्युअल् एस्टेबन् गोमेझ्नामकः । स च त्रयोदशवर्षीयः !! सः विशेषनिमन्त्रितरूपेण संसद्गोष्ठीम् अपि गच्छति ! अपूर्वप्रतिभाशाली अयं बालकः एतावता एव ग्वाटेमालानगरीयस्य विश्वविद्यालयस्य गणितविषयिणीं प्रगतपरीक्षाम् अपि उत्तीर्णः अस्ति ! सः वैमानिकाभियान्त्रिकपरीक्षां सम्मुखी-कर्तुम् इच्छति । सः एकदिनात्मकाध्यक्षपदं (President for a day), एकदिनात्मक-संसद्गोष्ठ्यध्यक्षपदं (Congressional President for a day) च एतावता एव अलङ्कुर्वन् राजनैतिकक्षेत्रे अपि सहभागम् ऊढवान् । अमेरिकाध्यक्षेण क्लिण्टनेन सह, राज्ञा पिलिप्पेन (यश्च स्पेनिश्सिंहासनस्य उत्तराधिकारी अस्ति) सह, अल्वारो अर्जुवर्येण सह चापि देशप्रतिनिधित्वेन मिलितवान् सः, स्वस्य अध्यक्षपदस्य त्यागात् पूर्वम् । सः शिक्षामन्त्रालयमाध्यमेन बह्वीनां शैक्षणिकयोजनानां क्रियान्वयनं सम्पादयति । केनडादेशे शिक्षासचिवस्य पेन्निप्रिड्डिवर्यस्य आप्तसचिवेषु अन्यतमौ स्तः भारतीयमूलौ विद्यार्थिनौ सुनीत-त्राहलः (सुरायप्रदेशीयः), सुल्तान्सुन्दरः (कामलूपीयः) च ।

## अल्पवयस्कः ऐन्द्रजालिकः



सतीशदेशमुखः अन्तराष्ट्रियख्यातिमान् ऐन्द्रजालिकः । तेन प्रदर्श्यमाने 'दि इल्लूसन्'नामके कार्यक्रमे 'किमया'नामिका त्रिवर्षीया बालिका भागं वहति । तद्द्वारा सा 'अल्पवयस्का ऐन्द्रजालिका' इति ख्यातिं प्राप्तवती अस्ति । एषा मुम्बयीनगरीयेण चलनचित्रनटेन हृतिकरोशनेन सह अभिनयन्ती विशेषख्यातिं प्राप्तवती अपि अस्ति !

## एते हि अपूर्वप्रतिभावन्तः !




- जस्टिन् चम्पनः षड्वर्षीयः । जन्मानन्तरं द्वितीये वर्षे एव तेन पठनम् आरब्धम् । इदानीं सः राचेस्टर्विश्वविद्यालयस्य तृतीयवर्षीय-कक्ष्यायां पठति । सः होमरस्य 'ईलियड्'काव्यम् अधिकृत्य एकं शोधपत्रं विलिख्य 'बि'स्तरं प्राप्तवान् अस्ति । इदानीं सः इतिहासविषये उपक्रमकक्ष्यायाम् अस्ति ।
- लास् एञ्जलिस्नगरीया 'एम्मेट् फुर्ला फिल्म्स्'संस्थायाः 'क्याम्प् ग्रिझ्ले' चित्रस्य निर्माणावसरे निर्देशकनिमित्तम् अल्पाकारकः आसन्दः व्यवस्थापनीयः अभवत् । यतः एतस्य चित्रस्य निर्देशकत्वेन चितः चैलीस्टोवेल् तु एकादशवर्षीयः बालः !
- केरले वयनाड्प्रदेशे निवसन् द्वादशवर्षीयः रशीदः मुस्लिम्समुदायम् एव आश्चर्यचकितं कृतवान् अस्ति । सः रमजान्पर्वकाले धार्मिकोपन्यासान् करोति लीलया । सः आंग्लया, अराबिक्भाषया, उर्दूभाषया, हिन्दीभाषया चापि भाषणं कर्तुं समर्थः अस्ति ।



## बालकेन कृतम् अस्ति ४ वेब्सैट्निर्माणम् !

चतुर्भ्यः वर्षेभ्यः पूर्वम् ए. वि. दिनेशः (एकादशकक्ष्यीयः, चन्नैनगरीयः) मैक्रोसाफ्ट्-संस्थया व्यवस्थापितं परीक्षाद्वयं, विना क्लेशम् उत्तीर्णः । तदा सः द्वादशवर्षीयः आसीत् । तदनन्तरं सः विविधजनानां कृते वेब्सैट्निर्माणे उद्युक्तः अभवत् । तेन एतावता ४००० पुटाः लिखिताः सन्ति तत्क्षेत्रसम्बन्धे । तदीयः SpicyKids.com बालानां कृते, TeenageTigers.com तरुणगणस्य कृते, DevelopersInfoway.com प्रोग्राम्लेखकानां कृते, DineshWorld.com च विविधक्षेत्राणां (Site) सम्पर्ककल्पनाय च अस्ति ।

# एकस्य वर्षस्य समाप्तिं निमित्तीकृत्य...

चन्दमामाप्रकाशनं वर्षात् पूर्वं पुनः आरब्धं यत् तत् तु महतः सन्तोषस्य विषयः । प्रियवाचकाः, भवतां प्रियपत्रिकायाः चन्दमामायाः गतवर्षीयाः द्वादश सञ्चिकाः इदानीं भवतां निकटे स्युः एव । तासां विषये कः अभिप्रायः भवताम् ? भवतां प्रतीक्षा सफला जाता स्यात्, वयं च भवतः सर्वान् निराशान् न कृतवन्तः स्याम इति भावयामः वयम् । वेतालकथा, पौराणिक-कथाः, जानपदकथाः, साहसकथाः, भारतभूमिवैभवस्मारिकाः कथाः, विदेशीयकथाः इत्यादिभिः सह ते अपि विषयाः अस्माभिः योजिताः, ये च भवद्भिः पत्रद्वारा सूचिताः । चित्रकथाः, ओलम्पिक्क्रीडाम् अधिकृत्य सचित्रविवरणम् इत्यादयः अपि प्रकाशिताः । तावदेव न, बालानां प्रतिभायाः पुरस्कारार्थं बालैः लिखिताभिः कथाभिः, बालैः चित्रितैः चित्रैः च उपेतः बालविशेषाङ्कः अपि ऐदम्प्राथम्येन प्रकाशितः गते मासे ।

एतत् तु आधुनिकं विषयसङ्ग्रहप्रधानं तन्त्रज्ञानप्रधानं च युगम् । अत्र महता वेगेन अभिवृद्धिः जायमाना अस्ति । अतः देशे विदेशे च स्थितानां हितचिन्तकानां नैतिकप्रोत्साहेन चन्दमामया निर्णीतम् अस्ति यत् टेलिसीरियल्, वेब्सैट्, साक्ष्यचित्रम् इत्यादयः अचिरात् एव निर्मातव्याः इति ।

एतदद्य स्पष्टं यत् चन्दमामा पूर्वतनम् एव वैभवं पुनः प्राप्नुवती अस्ति इति । दिने दिने वर्धमानाय ग्राहकसमुदायाय, दुःखे सुखे च समभागम् ऊढवद्भ्यः हित-चिन्तकेभ्यः, चन्दमामायाः एतस्यै यशस्वितायै गते वर्षे गण-भावेन कार्यं कृतवद्भ्यः कार्यकर्तृभ्यः, प्रेरणां दत्तवते मार्गदर्शनं कृतवते च विनोदसेथिवर्याय, आशीर्वादेन अनुगृहीतवत्यै पूज्यायै मात्रे च वयं हार्दां कृतज्ञतां समर्पयामः ।

चन्दमामायाः पुनःप्रकाशनस्य आरम्भस्य वर्षस्य अनन्तरम् एतस्मिन् शुभे अवसरे वयं यशस्वितायाः कारणीभूतान् सर्वान् ग्राहकान् उद्योगिबन्धून् सहकारिबान्धवान् च कृतज्ञतापूर्वकं स्मरन्तः एतां सञ्चिकां भावि-जनतायाः उज्ज्वल-भवितव्यस्य कृते समर्पयामः ।



**बी. विश्वनाथरेड्डी**

*प्रकाशकः*



## वेताल-कथा

# पुण्यस्य दानम्

दृढवतः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् - ''राजन्, भवता क्रियमाणः परिश्रमः, लक्ष्यं प्रति भवतः आस्था च अतुलनीयौ । अन्यः कोऽपि एवं करणे न समर्थः । किन्तु केवला एकाग्रता, केवलं पुण्यं च कस्यचित् कार्यस्य साफल्ये साधनं भवितुं न अर्हति । एतदुभयम् अस्ति चेत् कार्यं सेत्स्यति एव इति चिन्तनं मूर्खतायै । भवतः ज्ञानवर्धनाय, मनसः भ्रान्तेः दूरीकरणार्थं च अहं धनगुप्तस्य कथां



श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

''अवन्तीराज्यस्य कस्मिंश्चित् नगरे धनगुप्त-नामकः कश्चित् धनवान् पुरुषः वसति स्म । तस्य अपारा सम्पत्तिः आसीत् । किन्तु सः परमकृपणः । अनेकान् वञ्चयित्वा तेषां सम्पत्तिं स्वायत्तीकृतवान् आसीत् । निर्धनानां पीडने तस्य न कोऽपि सङ्कोचः आसीत् । स्वपरभेदं विना बहूनां जीवनं नाशितवान् आसीत् सः । एवं तस्य पापस्यूतः दिने दिने वर्धमानः आसीत् । पञ्चाशत्तमे वयसि सः रोगग्रस्तः अभवत् । शय्यातः उत्थाने अपि असमर्थः सः सर्वदा मञ्चे शयनं करोति स्म ।

तस्य पुत्रः गुणगुप्तः अन्वर्थनामा । स्वभावेन अत्यन्तम् उत्तमः मृदुभाषी च सः ज्येष्ठानां विषये आदरप्रकटनं स्वकर्तव्यं भावयति स्म । अतः सः कदापि पितुः वचनस्य विरोधं न प्रकटयति स्म । यद्यपि धनगुप्तेन निराकृतं, तथापि गुणगुप्तः कञ्चित् वैद्यम् आनीय पितुः चिकित्सां कारितवान् ।

धनगुप्तः शीघ्रमेव स्वस्थः जातः । किन्तु तस्य कण्ठः अवरुद्धः अभवत् । सम्भाषणं कर्तुम् असमर्थः सः अभिनयेन एव कार्यं साधयति स्म । तस्य दक्षिणहस्तः अपि कार्यं न करोति स्म । वैद्यैः तदर्थं बहुविधाः चिकित्साः कृताः । किन्तु कोऽपि लाभः न जातः । अन्ते वैद्यैः उक्तम् - ''पुनश्च धनगुप्तं पूर्ववत् कर्तुं न वयं समर्थाः'' इति ।

पितुः अङ्गवैकल्यस्य कारणतः गुणगुप्तः सम्पत्तेः निर्वहणस्य उत्तरदायित्वं यद्यपि स्वीकृतवान्, तथापि 'पिता पूर्ववत् भवतु, तस्मिन् एव सम्पत्तेः अधिकारः भवतु' इत्येव तस्य इच्छा आसीत् । अतः अन्ते सः संन्यासिनः शरणं गतः ।

एकदा महानन्दः नाम कश्चित् संन्यासी गुणगुप्तस्य गृहम् आगतवान् । सः आतिथ्यं स्वीकृत्य गुणगुप्तस्य प्रार्थनानुसारं धनगुप्तं परीक्षितवान् । किञ्चित्कालं नेत्रे निमील्य चिन्तनं कृत्वा सः खेदपूर्णेन स्वरेण गुणगुप्तम् उक्तवान् - ''धनार्जनार्थं भवतः पित्रा असङ्ख्यानि पापकार्याणि कृतानि सन्ति । तानि सर्वाणि कार्याणि सः दक्षिणहस्तेन करोति स्म इत्यतः तस्य दक्षिणहस्तः निष्क्रियः जातः अस्ति । तस्य मुखेन सर्वदा कटुवचनानि एव निस्सरन्ति स्म इत्यतः तस्य जिह्वा अपि निष्क्रिया । यावत् एषः स्वसम्पत्तेः त्यागं न

करोति तावत् पूर्ववत् न भविष्यति'' इति ।

महानन्दस्य वचनं श्रुत्वा धनगुप्तः हृत्पूर्वकं शिरः चालयन् स्वसम्मतिं प्रदर्शितवान् । मरणोत्तरशासनं तेन लेखितम् । स्वस्य समस्तायाः सम्पत्तेः उत्तराधिकारिरूपेण पुत्रः गुणगुप्तः यदा तेन निर्दिष्टः, तदा सः सम्भाषणे समर्थः अभवत् । मरणोत्तर-शासनस्य उपरि सः दक्षिणहस्तेन हस्ताङ्कनम् अपि कृतवान् । गृहे सर्वत्र आनन्दस्य च्छाया प्रसृता । अस्मिन् सन्दर्भे कश्चन महान् उत्सवः आचरणीयः इति सर्वेषाम् इच्छा अभवत् । सर्वे उत्सवस्य सज्जतायां मग्नाः आसन् । तदा एव आकस्मिकरूपेण गुणगुप्तस्य पुत्रः मणिगुप्तः उच्चैः क्रन्दनं कुर्वन् भूमौ अपतत् । महानन्देन यदा मणिगुप्तस्य परीक्षा कृता तदा ज्ञातं यत् 'तस्य दक्षिणहस्तः निष्क्रियः जातः, सम्भाषणसामर्थ्यं च गतम् अस्ति' इति ।

गुणगुप्तः स्वपुत्रस्य दुरवस्थां दृष्ट्वा स्तम्भीभूतः । 'एतस्य कारणं किम् ?' इति यदा सः महानन्दं पृष्टवान् तदा महानन्दः - ''भवतः पितुः पापानि इदानीं भवतः पुत्रस्य जीवनं प्रभावयन्ति सन्ति । भवता या सम्पत्तिः प्राप्ता अस्ति सा पापलिप्ता । पुण्यकार्यार्थम् एतस्य विनियोगेन एव पापस्य नाशःभवितुम् अर्हति । भवतः पिता पुण्यकार्यं कदाचित् न अङ्गीकुर्यात् । किन्तु इदानीम् एषा सम्पत्तिः भवदीया । यदि सः सत्कार्यं निराकरिष्यति तर्हि पुनश्च रोगग्रस्तः भविष्यति । भवता क्रियमाणानां सत्कार्याणां कारणतः पितुः पापकार्याणि यद्दिने पूर्णतः प्रक्षालितानि भवन्ति तद्दिने एव भवतः पुत्रः पूर्ववत्



भविष्यति'' इति उक्त्वा ततः निर्गतवान् ।

धनगुप्तः पौत्रस्य स्थितिं दृष्ट्वा अत्यन्तं दुःखितः अभवत् । 'अहं मम पौत्रस्य दुरवस्थां द्रष्टुं न शक्नोमि । अहं लज्जाम् अनुभवामि, यतः मम पापस्य फलं मम पौत्रः अनुभवति खलु इति । मम सम्पत्तिं प्रत्यर्पयतु । तेन वा भवन्तः सुखेन स्थातुम् अर्हन्ति' इति वेदनापूर्णस्वरेण अवदत् सः ।

गुणगुप्तः पितुः प्रस्तावं निराकृतवान् । धनगुप्तः पौत्रस्य दुरवस्थां द्रष्टुम् अशक्तः सन् पापनिवारणाय तीर्थयात्रार्थं गतवान् ।

ततः आरभ्य गुणगुप्तस्य पुण्यकार्याणि आरब्धानि । प्रायः तादृशम् एकमपि कार्यं न अवशिष्टं, यत् गुणगुप्तेन न कृतं स्यात् । ग्रामे विद्यमानानां प्राचीनमन्दिराणां पुनर्निर्माणं



तेन कारितम् । भक्तानाम् आनुकूल्याय निश्शुल्कव्यवस्थाः कल्पिताः । एका पाठ-शाला आरब्धा । तत्र निःशुल्कं पाठनम् आरब्धम् । अभावपीडितानां साहाय्यं कृतम् । बहुविधदानानि च कृतानि ।

एकं वर्षम् अतीतम् । तावता महान् व्ययः कृतः आसीत् । किन्तु गुणगुप्तस्य पुत्रस्य आरोग्ये किमपि परिवर्तनं न दृष्टम् ।

गुणगुप्तस्य पुण्यकार्याणां वार्ता देशे सर्वत्र प्रसृता अभवत् । सर्वे गुणगुप्तं 'महात्मा' इति भावयन्ति स्म । ते बहुधा तस्य प्रशंसाम् आरब्धवन्तः । किन्तु गुणगुप्तः प्रशंसाभिः प्रभावितः न अभवत् । दुःखस्य भारं सोढुम् अशक्तः सः बहु खिन्नः अभवत् । प्रतिदिनं पुत्रस्य समीपं गत्वा तस्य दुरवस्थां दृष्ट्वा अश्रूणि स्त्रावयन् - 'मया यत् पुण्यं क्रियमाणम् अस्ति तस्य फलं न प्राप्यते खलु' इति चिन्तयन् खेदम् अनुभवति स्म सः ।

एकदा तस्य बान्धवाः सर्वे एकत्र सम्मिल्य गुणगुप्तं बोधितवन्तः - ''भवतः पुण्य-कार्यद्वारा कः लाभः अभवत् ? इदानीं वा भवान् एतादृशकार्येभ्यः दूरे तिष्ठतु । इतर-देशेषु स्ववाणिज्यस्य विस्तरणं करोतु । वयं भवतः साहाय्यं कुर्मः'' इति ।

बान्धवानां वचनस्य विशेषप्रभावः तस्मिन् कोऽपि न अभवत् । सः स्पष्टतया - ''मया कृतैः सत्कार्यैः बहवः निर्धनाः असहायाः लाभान्विताः अभवन् । तेन एव मम तृप्तिः। मम वाणिज्यम् अपि उत्तमरीत्या प्रचलति । वाणिज्यवर्धनस्य विचारः मम सर्वथा नास्ति'' इति उक्त्वा तान् प्रेषितवान् ।

तेषु एव दिनेषु तस्य देशस्य राज्ञः पृष्ठे व्रणः उत्पन्नः । बहुविधाः चिकित्साः कारिताः चेत् अपि प्रयोजनं न अभवत् । घोरनिराशया ग्रस्तः राजा 'मम मरणकालः सन्निहितः' इति अचिन्तयत् । शासनाधिकारं मन्त्रिषु निक्षिप्य सः सत्सङ्गेन कालयापनम् आरब्धवान् ।

कदाचित् महानन्दः राजानं द्रष्टुम् आगत-वान् । राज्ञः दुरवस्थां दृष्ट्वा सः करुणया - ''राजन्, अहं जानामि यत् भवान् सज्जनः, सत्पुरुषः च इति । किन्तु भवता अनवधानेन अन्यायादिकं कृतं स्यात् अपि । कदाचित् भवतः कारणतः निर्दोषिणः दण्डिताः अपि स्युः । दोषिणः च विमोचनं प्राप्य इतोऽपि अधिकानि पापकार्याणि कुर्वन्तः स्युः । तानि पापानि एव व्याधिरूपेण भवन्तं पीडयन्ति ।

इदानीं चिकित्सया न किमपि प्रयोजनम् । भवतः राज्यीयः कश्चित् पुण्यवान् स्वपुण्यं यदि भवते समर्पयेत् तर्हि भवान् व्याधिमुक्तः भवेत्'' इति उक्तवान् ।

तदा महाराजः अवदत् - ''भवान् एव वदतु यत् तादृशः पुण्यवान् कः, सः कुत्र अस्ति इति'' इति ।

महानन्दः तं गुणगुप्तस्य नाम सूचितवान् । महाराजः गुणगुप्तम् आहूय स्वस्य इच्छां प्रकटितवान् ।

तदा गुणगुप्तः - ''महाराज, मया कृतानां पुण्यकार्याणां परिणामः किञ्चित् अपि न दृश्यते । अतः एव मम पुत्रः यथापूर्वम् अस्ति । अहं भावयामि यत् मम पुण्यं भवते दत्तं चेत् अपि ततः भवतः कोऽपि लाभः न भवेत् इति'' इति उक्तवान् ।



तदा महानन्दः - ''गुणगुप्त, भवतः पितुः पापानि खलु भवतः पुत्रेण स्वीकृतानि ? तेन भवतः पितुः पापानि प्रक्षालितानि अभवन् । तस्य उत्तराधिकारिणा सता भवता सत्कार्याणि कृतानि । तस्य परिणामतः भवतः सम्पत्तिः त्रिगुणिता अभवत् । सत्कार्यस्य परिणामः न अभवत् इति यत् भवतः चिन्तनम् अस्ति तत् भवतः अविवेकं द्योतयति'' इति अवदत् ।

''स्वामिन्, सम्पत्तिं प्राप्तुं मया सत्कार्याणि न कृतानि । मम पुत्रः स्वस्थः भवतु इत्येव मम इच्छा आसीत्'' इति उक्तवान् गुणगुप्तः ।

तदा महानन्दः अवदत् - ''भवतः सम्पत्तेः चतुर्थः भागः भवतः पितुः । भागत्रयस्य अधिकारी भवान् । पितुः भागम् आधारीकृत्य भवान् सत्कार्यं कृतवान् । स्वसम्पत्तिम् आधारीकृत्य भवान् सत्कार्याणि करोतु । ततः भवतः पुत्रः स्वस्थः स्यात्'' इति ।

महानन्दस्य वचनैः आश्चर्यम् अनुभवन् गुणगुप्तः - ''यानि पुण्यानि इदानीं मम समीपे सन्ति तानि यदि महाराजाय दद्यां तर्हि अहं पुण्यरहितः स्याम् । ततः मम स्थितिः पूर्ववत् एव भवेत् । स्वामिन्, भवान् एव वदतु - मया किं करणीयम् इति'' इति अवदत् ।

महानन्दः - ''भवान् स्वयं निर्णयं करोतु'' इति अवदत् ।

गुणगुप्तः क्षणं यावत् विचिन्त्य - ''मम पुण्येन महाराजस्य यदि स्वास्थ्यलाभः स्यात् तर्हि मम पुण्यानां दानमेव उचितम् इति चिन्तयामि । यतः मम पुत्रः कदा स्वस्थः

भवेत् इति तु वक्तुं न शक्यते । अतः अहं पुण्यं महाराजाय दास्यामि'' इति स्वनिर्णयं श्रावितवान् ।

महानन्दस्य आध्यक्ष्ये मन्त्रोच्चारणपूर्वकं गुणगुप्तः स्वपुण्यं राज्ञे सहर्षं समर्पितवान् । राज्ञः व्याधिः अनुक्षणम् अपगतः ।

सन्तुष्टः राजा गुणगुप्ताय प्रभूतं धनं दातुम् इष्टवान् । तदा गुणगुप्तः महाराजं प्रति - ''भवान् मह्यं यत् धनं दातुम् इच्छति तेन प्रजाहितकार्यं करोतु । निस्स्वार्थसेवायां मनः योजयतु'' इति उक्त्वा राज्ञः अनुमतिं स्वीकृत्य ततः निर्गतवान् ।

महानन्दः अपि गुणगुप्तेन सह गतवान् । तावता धनगुप्तः तीर्थयात्रां समाप्य प्रत्यागतवान् । सर्वेषाम् उपस्थितौ एव काचित् विचित्रघटना प्रवृत्ता । धनगुप्तेन आनीतं गङ्गाजलं पीत्वा मणिगुप्तः पूर्ववत् स्वास्थ्यं प्राप्तवान् ।

एतां कथां श्रावयित्वा वेतालः त्रिविक्रमम् अवदत् - ''राजन्, गुणगुप्तेन बहुविध-पुण्यकार्याणि कृतानि । राज्यस्य सर्वे जनाः तं प्रशंसन्ति स्म । तादृशस्य पुण्यवतः पुण्यानि अपि तत्पुत्रस्य स्वास्थ्यलाभाय न अभवन् । किन्तु धनगुप्तसदृशः पापी तीर्थयात्रां कृत्वा आगतवान् इत्येतेन केवलेन कथं मणिगुप्तः स्वस्थः अभवत् ? कथम् एवं प्रवृत्तम् ? मम समस्यायाः समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''यस्मिन् क्षणे धनगुप्तः स्वसम्पत्तिं पुत्राय समर्प्य पौत्रस्य स्वास्थ्यं मनसि निधाय तीर्थयात्रार्थं गतवान् तस्मिन् एव क्षणे सः पापमुक्तः अभवत् । किन्तु मणिगुप्तः स्वस्थः अभवत् इत्यत्र धनगुप्तेन आनीतं गङ्गाजलं कारणं न, अपि तु गुणगुप्तस्य पुण्यमेव कारणम् । तावत्पर्यन्तं गुणगुप्तस्य पुण्ये स्वार्थः आसीत् । किन्तु यदा सः निःस्वार्थभावेन स्वपुण्यं राज्ञे समर्पितवान् तदा एव तस्य पुत्रः पूर्ववत् जातः । स्वार्थहीनदाने महती शक्तिः भवति । दानेषु पुण्यदानम् अत्यन्तं श्रेष्ठम्'' इति ।

एवम् उपायेन राज्ञः मौनभञ्जनं कर्तुं शक्तः वेतालः शवेन सह अदृश्यः भूत्वा पुनश्च वृक्षे लम्बमानः अतिष्ठत् ।



## एतन्मासे जातः महापुरुषः

# बाबु राजेन्द्रप्रसादः

१८८४ तमे वर्षे डिसेम्बर्मासस्य ३ दिनाङ्के बिहार्राज्ये एकस्य बालकस्य जननम् अभवत् । सः अग्रिमेषु दिनेषु भारतस्य प्रथमः अध्यक्षः जातः । सः एव बाबु राजेन्द्रप्रसादः ।

राजेन्द्रप्रसादः कलकत्ताविश्वविद्यालये शिक्षणं प्राप्तवान् । तस्मात् सः पाटनानगरं प्रति गतवान् । तत्र सः न्यायशास्त्रस्य अध्ययनं कृतवान् । अचिरात् एव सः उच्चन्यायालयस्य प्रसिद्धेषु न्यायवादिषु अन्यतमः जातः । परन्तु तस्य मनसि मातृभूमेः पराधीनता निरन्तरं बाधते स्म । १९१७ तमे वर्षे सः महात्मगान्धिमहोदयेन मिलितवान् । गान्धिवर्यः बिहारस्य चम्पारण्यप्रदेशे प्रवृत्तस्य सत्याग्रहस्य नेता आसीत् । अविलम्बेन एव राजेन्द्रप्रसादः अभिवृद्धिहेतुकम् उद्योगं परित्यज्य सत्याग्रहे भागं गृहीतवान् ।



अल्पे एव काले सः स्वसामर्थ्यबलेन नेता जातः । १९२२ तमे वर्षे सः राष्ट्रियकाङ्ग्रेस्-पक्षस्य कार्यदर्शिपदे नियुक्तः । सः तत्र स्वस्य बुद्धिमत्तां प्रतिभाशालितां च व्यवहारेण दर्शितवान् । अतः एव पौनःपुन्येन १९३४ तमे, १९३९ तमे, १९४७ तमे च वर्षे सः काङ्ग्रेस्पक्षस्य अध्यक्षत्वेन चितः यत् तत् तु आश्चर्याय । १९४६ तमे वर्षे राज्यसभासदस्यैः स्वतन्त्रभारतस्य संविधानरचनासभायाः अध्यक्षत्वेन सः चितः । संविधानस्य रचनायाम् एतस्य सहभागः महान् ।

१९४७ वर्षे पण्डित-जवहारलालनेहरू-महोदयेन रचिते मन्त्रिमण्डले राजेन्द्रप्रसादवर्यः अपि मन्त्री जातः । यदा १९५० वर्षे नूतनं संविधानं कार्यपथे आगतं तदा एषः देशस्य अध्यक्षत्वेन चितः । तदनन्तरकाले अपि तत्पदार्थं सः पौनःपुन्येन १९५२ तमे, १९५७ तमे च वर्षे चितः ।

सः भारतस्य अध्यक्षः सन् सामान्यजनानां निरन्तरसम्पर्कम् अपि रक्षितवान् आसीत् । सः देशे बहुधा अटितवान् प्रायः धूमशकटेन । प्रयाणकाले तत्र तत्र जनान् उद्दिश्य भाषणं कुर्वन् प्रयाणं करोति स्म सः ।

निवृत्तिसमये देशस्य अत्युन्नतेन 'भारतरत्न'पुरस्कारेण सः सम्मानितः । सः १९६३ तमे वर्षे फेब्रवरीमासे २८ दिनाङ्के पटनानगरे दिवङ्गतः । तस्य विषये गौरवलेखं लेखितुं यदा कवयित्री सरोजिनीनायडु प्रार्थिता तदा तया लिखितं – 'तदहम् अकरिष्यम् यदि मत्समीपे मधुना पूरिता सुवर्णलेखनी अभविष्यत् । यतः सर्वे शब्दाः अपि तस्य गुणातिशयं वर्णयितुं गौरवादरसमर्पणार्थं वा अपर्याप्ताः भवन्ति' इति ।



# श्वश्रूस्नुषयोः सज्जनता

सरला कलहशीला बालिका । ब्रह्मपुरे समग्रे तस्याः नाम विख्यातम् आसीत् । 'यदि एषा श्वशुरगृहं गच्छेत् तर्हि, न ज्ञायते, कथं जीविष्यति इति' इति तस्याः मातापितरौ सदा चिन्तयतः स्म ।

दैवानुग्रहेण उत्तमकुलीयाः जनाः वधूत्वेन तस्याः स्वीकारस्य इच्छां प्रकटितवन्तः । वरः राजेशः उत्तमस्वभाववान्, शान्तः, कस्याश्चित् शालायाः अध्यापकः च । तस्य बुद्धिमत्ता अपि ख्याता आसीत् । पित्रार्जिता सम्पत्तिः अपि अधिका एव आसीत् तस्य ।

तस्य माता सुभद्रा महाकलहप्रिया । तस्याः तर्जनादिभ्यः भीताः कर्मकराः तस्याः गृहे कार्यं कर्तुं न इच्छन्ति स्म । विना कारणं तर्जने तस्याः विशेषासक्तिः । किन्तु तस्याः इच्छा तु आसीत् यत् सर्वे मम प्रशंसां कुर्युः इति ।

सुभद्रायाः एतं स्वभावं ज्ञात्वा सरलायाः मातापितरौ चिन्तयतः स्म यत् एतादृशाय गृहाय आवयोः पुत्री दत्ता चेत् किं सा सुखेन तिष्ठेत् इति ? सरलायाः कलहशीलता सुभद्रया अपि ज्ञायते स्म । तथापि सा न चिन्ताग्रस्ता । सरला अपि तथैव ।

'मां सर्वे कलहशीलां भावयन्ति । मम सज्जनत्वं कोऽपि न जानाति । यदि दुष्टा स्नुषा मम गृहम् आगच्छेत् तर्हि जनाः तया मां तोलयन्तः मम गुणान् अवगच्छेयुः । अतः सरला मम गृहस्य स्नुषा भवति चेदेव वरम्' इति चिन्तयति स्म सुभद्रा ।

सरला चिन्तयति स्म - 'अहम् उत्तमा अस्मि । यदि अहं श्वश्र्वाः विषये उत्तम-व्यवहारं प्रदर्शयेयं तर्हि जनाः मम श्रेष्ठताम् अवगच्छेयुः' इति । अतः सा मातापितरौ उक्तवती - ''एषः विवाहप्रस्तावः मया

अनुमन्यते'' इति ।

सरला-राजेशयोः विवाहः सम्पन्नः । 'श्वश्रूः मां बहुधा पीडयति इति वदन्ती पुत्री यदाकदाचित् अपि गृहं प्रत्यागन्तुम् अर्हति' इति सरलायाः मातापितरौ चिन्तयतः स्म । 'अहं मातृगृहं गच्छामि इति वदन्ती मम पत्नी कदाचित् कोलाहलं कुर्यात्' इति राजेशः अपि आतङ्कयुक्तः आसीत् । किन्तु आश्चर्यं नाम गृहे शान्तपरिसरः दृश्यते स्म ।

सरला यदा प्रतिवेशिनीभिः सह वार्तालापं करोति स्म तदा सा श्वश्र्वाः गुणान् बहुधा प्रशंसति स्म । सुभद्रा अपि तथैव । 'मम स्नुषा अत्युत्तमा' इति सर्वान् वदति स्म सा । तयोः एषः व्यवहारः सर्वेषु आश्चर्यम् अजनयत् ।



कदाचित् सरला मातृगृहम् आगतवती । सर्वेषां पुरतः श्वश्र्वाः गुणान् प्रशंसितवती च ।

तदा सरलायाः माता उक्तवती - ''वत्से ! भवत्याः सौभाग्यं दृष्ट्वा अहं नितरां सन्तुष्टा अस्मि'' इति ।

''किं तादृशं सौभाग्यं दृष्टं भवत्या ?'' इति पृष्टवती सरला ।

''श्वश्रूः स्नुषां न पीडयति यत् तत् किं स्नुषायाः सौभाग्यं न ? पतिगृहे पुत्री सुखेन आनन्देन च यदि वसेत् तर्हि ततोऽप्यधिकः आनन्ददायकः विषयः कः अन्यः स्यात् ? मम तु भीतिः आसीत् यत् भवतीं भवत्याः श्वश्रूः पीडयेत् इति'' इति उक्तवती माता ।

''किमर्थं वा सा मां पीडयेत् ?'' इति पृष्टवती सरला ।

''तस्याः कलहप्रियता तु सर्वत्र प्रसिद्धा खलु ? अतः मया तथा चिन्तितम्'' इति उक्तवती माता ।

तदा सरला उक्तवती - ''तस्याः कलह-प्रियता तु अद्यापि अक्षुण्णतया अनुवर्तते एव । तथापि तादृश्याः अपि श्वश्र्वाः प्रशंसा प्राप्ता इत्यतः मां कुतो वा न श्लाघते भवती ?'' इति ।

''अतः एव मया उक्तं खलु - सौभाग्यं भवत्याः इति । तस्याः तोषणं सर्वथा असाध्यम् इति मया चिन्तितम् आसीत्'' इति उक्तवती माता ।

''सा इदानीम् अपि यथापूर्वम् एव व्यवहरन्ती विना कारणं मां निन्दन्ती भवति । तथापि अहं तां प्रशंसन्ती अस्मि यत् तत्

खलु मम सज्जनत्वं द्योतयति ? भवती एतत्सर्वं जानती अपि यदि मम सज्जनत्वं न प्रशंसेत् तर्हि मम सर्वोऽपि श्रमः व्यर्थः एव'' इति खेदेन उक्तवती सरला ।

''एवम् ! वत्से, अलं चिन्तया । उत्तम-स्वभावां मम स्नुषां किमर्थं भवती पीडयति इति पृष्ट्वा भवत्याः श्वश्र्वाः व्यवहारम् अद्यैव खण्डयिष्यामि'' इति सान्त्वनस्वरेण उक्तवती माता ।

''तत्किमपि न आवश्यकम् । भवती मम सज्जनत्वं, श्वश्र्वाः दुष्टतां च अवगच्छति चेत् तावता अलम्'' इति उक्तवती सरला ।

तदा यद्यपि माता मौनम् आश्रितवती तथापि तस्याः मनः चिन्तारहितं तु न जातम् । अतः सा सुभद्रायाः बन्धुं, स्वस्य सखीं मीनाक्षीम् उक्तवती - ''भवती वा सुभद्रां सद्व्यवहारं बोधयतु'' इति ।

तदा मीनाक्षी आश्चर्यं प्रकटयन्ती उक्तवती - ''अहो, उभयोः अपि समानः स्वभावः'' इति ।

''किम् एतस्य तात्पर्यम् ? वस्तुस्थितिः का ?'' इति पृष्टवती सरलायाः माता ।

तदा मीनाक्षी हसन्ती उक्तवती - ''गते मासे सुभद्रा मिलिता आसीत् । मया अपृष्टा अपि सा स्नुषायाः गुणान् प्रशंसितवती । 'तादृशी स्नुषा भवत्या अदृष्टवशात् एव प्राप्ता' इति मया उक्तम् । 'किम् अदृष्ट-कारणतः ? सा तु पदे पदे कलहं करोति । तथापि अहं तस्याः अवगुणं सहमाना तां प्रशंसन्ती अस्मि यत् तत् मम श्रेष्ठता । भवती एतत् अनवगच्छन्ती तां प्रशंसति' इति कोपेन उक्तवती सुभद्रा । एषा वस्तुस्थितिः'' इति ।

मीनाक्ष्याः कथनं श्रुत्वा सरलायाः माता दिग्भ्रान्ता । 'अन्यस्याः अपकीर्तिः भवतु इति उद्देशेन एव उभे अपि परस्परं प्रशंसतः' इति अवगतवती सा आश्चर्यचकिता ।

''उभयोः अपि उद्देशः असमीचीनः एव । तथापि ततः कुटुम्बस्य हितम् एव सिद्धम् । उष्णम् उष्णेन शाम्यति इत्येतस्य उदाहरणं प्रायः एतत् एव'' इति उक्तवती मीनाक्षी ।

सरलायाः माता प्रत्युत्तरं किमपि अवदन्ती ततः गतवती ।





# सुवर्णसिंहासनम्-११

*[कौण्डिन्यदेशस्य युवराजः विजयदत्तः राज्याभिषेकार्थं सन्नद्धः जातः । स्वर्णसिंहासनस्य प्रथमद्वितीयसोपानयोः स्थिताभ्यां सत्यशक्ति-धर्मशक्तिभ्यां सालभञ्जिकाभ्यां ये सन्देहाः प्रकटिताः ते योग्येन क्रमेण एव निवारिताः तेन । तृतीयसोपाने स्थिता न्यायशक्तिरूपा सालभञ्जिका तस्य न्यायनिर्णयदक्षतां परीक्षितुम् इष्टवती । अतः सा न्यायवर्धननामकस्य राज्ञः न्यापालनक्रमं विस्तरेण ज्ञापितवती । न्यायवर्धनस्य आस्थानं प्रति आगतान् त्रीन् विवादान् अपि सा विस्तरेण श्रावितवती । तदनन्तरम्......]*

एवं न्यायवर्धनस्य तस्य दिनस्य न्याय-निर्णयकार्यक्रमः समाप्तः । कुमार-केतुः सर्वान् व्यवहारान् श्रद्धया शृण्वन् आसीत् । एतद्विषये एव चिन्तयन् सः वासभवनं प्रति गतवान् ।

रात्रौ राजा महता प्रेम्णा तं स्वसमीपम् आहूय उक्तवान् - ''वत्स ! न्यायनिर्णय-प्रक्रियां भवान् समग्रतया दृष्टवान्, अवगत-वान् च इति अहं भावयामि । एतद्विषये मया किञ्चित् उच्यते । श्रद्धया शृणोतु तावत् । वणिजः रत्नगुप्तस्य अद्वितीयपुत्रः अस्ति हेमगुप्तः । सः द्यूतरतः, मद्यपः, दुर्व्यसनी च अस्ति । पित्रा सप्ताहात्मकश्रमेण यावत् सम्पाद्यते तावत् सः एकदिनाभ्यन्तरे एव व्ययीकरोति स्म । तस्य पितुः रत्नगुप्तस्य विषये दोषारोपः यः कृतः तमपि भवान्



श्रुतवान् । एतद्विषये भवतः निर्णयः कीदृशः भवेत् इति ज्ञातुं मे महत् अस्ति कुतूहलम् । कृपया श्रावयतु'' इति ।

न्यायवर्धनस्य कथनस्य श्रवणात् कुमारकेतोः मुखं विकसितम् ।

एतावत् उक्त्वा सालभञ्जिका विजयदत्तम् अपृच्छत् – ''युवराज ! न्यायवर्धने या न्यायविचक्षणता दृष्टा सा किं भवति अपि अस्ति ? यदि अस्ति तर्हि किं कुमारकेतोः आशयस्य अवगमनार्थं प्रयासेन ? भवान् एव तम् आशयं विशदीकरोतु । यदि भवतः कथनं युक्तियुक्तं स्यात् तर्हि भवान् तस्मिन् सुवर्णसिंहासने न केवलम् उपवेष्टुम् अर्हः, अपि तु एतस्य सुवर्णसिंहासनस्य स्त्रष्टुः पुलिन्दभट्टारकस्य अपूर्वां सृष्टिं मन्त्रपूतं चन्द्रहासनामकं खड्गम् अपि प्राप्तुम् अर्हति । यदि भवान् असफलः स्यात् तर्हि एतावत्पर्यन्तं भवता कृताः सर्वे प्रयासाः व्यर्थाः भवेयुः । तदा भवतः पश्यतः एव, एतत् प्रकाशमानं सिंहासनम् अदृश्यतां गमिष्यति । अतः विचिन्त्य व्यवहरतु । जयोऽस्तु भवतः । विजयोऽस्तु'' इति ।

सालभञ्जिकायाः कथनं श्रुत्वा विजयदत्तः – ''न्यायदेवि ! मया स्वसामर्थ्यविषये स्वयं यदि किमपि उच्यते तर्हि तत् अनौचित्याय स्यात् । अन्यच्च, आत्मख्यापने मम आसक्तिः अपि नास्ति । मम उत्तरं श्रुत्वा भवती एव निर्णयतु – मम सामर्थ्यं कीदृशम् इति'' इति उक्त्वा सः स्वस्य कथनम् अनुवर्तितवान् –

''समग्रं मानवकुलं त्रिधा विभक्तुं शक्यम् – उत्तममध्यमाधमभेदेन । तत्तद्योग्यतानुगुणं सर्वे अपि मानवाः एतेषु त्रिषु कस्मिंश्चित् विभागे अन्तर्भावम् अर्हन्ति एव । न्यायम् अपेक्ष्य आगताः जनाः कस्मिन् विभागे अन्तर्भागम् अर्हन्ति इति राज्ञा आदौ चिन्तनीयम् । एतदर्थं राज्ञा स्वस्य सूक्ष्म-चिन्तनसामर्थ्यस्य उपयोगः करणीयः । राज्ञः चिन्तनं यावत् उत्कृष्टं भवति तावत् तदीयः निर्णयः अपि उत्कृष्टः भवेत् । उत्तम-विभागीयस्य जनस्य दण्डस्य निमित्तम् एकं सामान्यं वचनम् अपि पर्याप्तम् । मध्यम-वर्गीयस्य दण्डनार्थं सविवरणव्यवहारः, अल्पस्य दण्डस्य प्रयोगश्च आवश्यकः । अधमस्तरीयाः तु क्षुद्रसर्पाः इव । क्षुद्रसर्पस्य प्रहारार्थं महादण्डस्यैव उपयोगः करणीयः इति लोकोक्तिः तावत् प्रसिद्धा एव ।

अधमवर्गीयस्य अपराधः अल्पः चेदपि तर्जनभर्त्सनादिकं महता प्रमाणेन एव भवेत्, दण्डनम् अपि तेनैव सह स्यात् ।

उत्तमवर्गीयः स्वाभिमानी भवति । आत्मना कृतस्य अल्पस्यापि अपराधस्य निमित्तं पश्चात्तापम् अनुभवति सः । परिस्थितिकारणतः यः दोषः कृतः तं सः किञ्चित्कालानन्तरं स्वयम् अङ्गीकरोति । मध्यमवर्गीयः स्वस्य दोषस्य विषये पश्चात्तापं न अनुभवति । अधमः तु स्वस्य दोषस्य अङ्गीकारम् अपि न इच्छति ।

स्वसमीपे आगतः कः किंवर्गसम्बन्धी इति राज्ञा सम्यक् चिन्तनीयम् । न्यायानिर्णयकाले अयं निर्णयः एव प्रामुख्यम् आवहति । स्वस्य देशस्य प्रमुखजनानां व्यवहारविषये अपि राज्ञः अवधानं स्यात् । गुप्तचरान् नियोज्य काले काले तेन प्रमुखजनानां जीवनपद्धतेः आन्तरङ्गिकजीवनस्य च समग्रं विवरणं सङ्ग्रहणीयम् ।

न्यायवर्धनस्य त्रयः व्यवहाराः भवत्या विवृताः खलु ? तत्र प्रथमः अभियोगी आसीत् वीरः । सः मध्यमवर्गीयः । तेन यः दोषः कृतः तदनुगुणम् एव राजा न्यायनिर्णयं श्रावितवान् । स च निर्णयः प्रशंसार्हः न्याय-सिद्धान्तानुगुणः च अस्ति ।

द्वितीयः व्यवहारः तावत् रत्नगुप्त-सम्बद्धः । रत्नगुप्तः उत्तमवर्गीयः । अतः तस्य विषये राज्ञः निर्णयः न प्रकटः । अभियोगं कृतवान् मणिकर्णः अपि न ज्ञातवान् यत् राजा कं दोषित्वेन निर्णीतवान् इति । एतस्य व्यवहारस्य आन्तर्यं, राज्ञः निर्णयस्य स्वरूपं



च ज्ञातव्यं चेत् अस्माभिः सुभद्रदेशस्य ख्यातनामसु वणिक्षु अन्यतमस्य रत्नगुप्तस्य आन्तरङ्गिकं जीवनं सकृत् आद्यन्तं परिशीलनीयम् ।

रत्नगुप्तः उत्तमस्वभाववान् विश्वासपात्रं च । मणिकर्णः यदा अन्यान् वणिजः पृष्टवान् तदा सर्वे अपि रत्नगुप्तविषये उत्तमाभिप्रायम् एव प्रकाशितवन्तः इत्येतदेव अत्र प्रमाणम् । एतादृशः जनः यदि कमपि अपराधं कृतवान् स्यात् तर्हि तस्य प्रबलं कारणं किमपि स्यादेव । रत्नगुप्तस्य व्यवहारस्य कारणं तदीयः पुत्रः हेमगुप्तः । दुर्व्यसनासक्तं तं परिष्कर्तुं पिता रत्नगुप्तः बहुधा प्रयत्नं कृतवान् । किन्तु तेन सफलता न प्राप्ता । पुत्रव्यामोहस्य जयः न सुलभः । पुत्र-



व्यामोहवशात् महापुरुषाः अपि क्वचित् अकार्यं कुर्वन्ति । महाभारतकथायां महाराजः धृतराष्ट्रः अपि एतत् एव कृतवान् खलु ? रत्नगुप्तेन अपि तदेव कृतम् । सः अल्पे एव काले अधिकं धनं सम्पाद्य पुत्रस्य भविष्यं सुरक्षितं कर्तुम् इष्टवान् ।

महाराजः न्यायवर्धनः रत्नगुप्तस्य जीवनं समग्रतया जानाति स्म । तेन अवगतं यत् रत्नगुप्तः पुत्रव्यामोहवशात् अन्धः इव व्यवहरन् विदेशीयवणिजं मणिकर्णं वञ्चितवान् इति । उत्तमवर्गीयः जनः यदा अकार्यं करोति तदा सः - 'मया एतत् न कृतम्' इति एतावन्मात्रम् एव वदति, न तु तस्य समर्थनप्रयत्नं करोति । रत्नगुप्तेन अपि एतत् एव कृतम् । एतेन राज्ञः सन्देहः दृढः जातः । अतः राजा तं पृष्टवान् - 'भवतः पुत्रः कुशली खलु ?' इति । एतस्य प्रश्नस्य श्रवणात् एव रत्नगुप्तः अवगतवान् यत् मेधावी राजा वस्तुस्थितिं ज्ञातवान् एव अस्ति इति । अतः तस्य मुखं विवर्णं जातम् । राजा एतत् दृष्ट्वा तम् एकान्तस्थलं प्रति प्रेषितवान् ।

दोषं कृतवतः उत्तमवर्गीयस्य जीवने तदीयः अन्तरात्मा एव न्यायाधीशः । सः तं युक्तायुक्ततां ज्ञापयति । तत्रापि एकान्ते सः दोषज्ञापनं करोति पौनःपुन्येन ।

रत्नगुप्तः अपि एकान्ते न्यायाधीशरूपिणा अन्तरात्मना ज्ञापितः सन् महतीं व्यथां अनुभूतवान् । अतः प्रकोष्ठतः प्रत्यागमन-काले तदीयं मुखं नितरां म्लानम् आसीत् । राजा तु तस्य मुखभङ्गं कर्तुं न इच्छति स्म । अतः सः तम् उक्तवान् - 'मणिकर्णः पुत्रसमानः । पितृवत् भवता सः द्रष्टव्यः । तस्मिन् वात्सल्यातिशयः प्रदर्शनीयः' इति । एवं वदता राज्ञा ज्ञापितम् आसीत् यत् भवता कृतः व्यवहारः सर्वथा खण्डनार्हः इति । रत्नगुप्तः अपि मेधावी आसीत् एव खलु ? अतः सः क्षणमात्रेण राज्ञः आशयम् अवगतवान् ।

राजा आदरेण एव व्यवहरन् भङ्ग्यन्तरेण दोषं ज्ञापयन् अपमानतः तं रक्षितवान् आसीत् । अतः सः राज्ञे कृतज्ञतां समर्पित-वान् । सः मणिकर्णाय धनं दत्तवान् वा न वा इति ज्ञातुम् इच्छति स्म राजा । अतः सः तौ सूचितवान् - 'श्वः भवन्तौ पुनः अत्र आगच्छताम्' इति । रत्नगुप्तेन कृता वञ्चना

केनापि यथा न ज्ञायेत तथा जागरूकताम् आश्रितवान् आसीत् सः । किन्तु वञ्चनायाः परिहारः अपि यथा स्यात् तथा उपायम् अपि सः आश्रितवान् आसीत् एव । एवं गूढतया अन्याय्यं समीकृत्य अपराधिनम् ऋजुमार्गे आनीय समग्रं व्यवहारं मङ्गलमयं कृतवान् सः ।

तृतीयव्यवहारे प्रस्तुता वृद्धा अधमवर्गीया मूर्खा सा । अतः राजा तस्याः विषये कठोरतया एव व्यवहृतवान्, तां कारागारं प्रेषितवान् च । किन्तु महिला सदा अपि कृपापात्रं भवत्येव खलु ? अतः राज्ञा दिनत्रयानन्तरं तस्याः कारागारविमोचनं विहितम् ।

एवं त्रिषु अपि व्यवहारेषु राजा तत्तस्य जनस्य योग्यतानुगुणं व्यवहरन् न्यायधर्मम् अन्यूनातिरिक्ततया पालितवान् अस्ति एव'' इति ।

विजयदत्तस्य कथनं यदा समाप्तं तदा तृतीया सालभञ्जिका हर्षं प्रकटयन्ती अवदत् - ''साधु, युवराज ! पुलिन्दभट्टारकेण यादृशः जनः चिन्तितः आसीत् तादृशः अस्ति भवान् एव । अतः तस्य योग्यम् उत्तराधिकारित्वं भवतः एव । महातन्त्रशास्त्रनिपुणस्य तस्य अपूर्वा सृष्टिः एतत् सुवर्णसिंहासनम् । एतस्मिन् उपवेष्टुम् अर्हता अधिकारः च भवतः एकस्य एव अस्ति । चक्रवर्तित्वं प्राप्य भवान् अपारां कीर्तिं निश्चयेन सम्पादयिष्यति ! निरातङ्कतया भवान् इदानीं सिंहासनम् आरोढुम् अर्हति । स्वागतं भवतः । स्वागतं भाविचक्रवर्तिनः'' इति ।

तया कृतः जयघोषः सभायां प्रति-





विजयदत्तस्य पट्टाभिषेकं निर्वर्त्य तं महाराजं

ध्वनितः । सभ्यानां करताडनध्वनिः तु तं जयघोषध्वनिम् अपि अतिक्रम्य दीर्घकालं व्यराजत ।

ततः विजयदत्तः तृतीये सोपाने पदं स्थापितवान् । तदनन्तरक्षणे हैहयवंशीयानाम् आराध्यदेवतायाः गायत्र्याः पादतले स्थापितं पद्मपुष्पाकारं शिल्पं पद्मम् इव विकासं प्राप्नोत् । तस्य अन्तः माणिक्यानि आसन् । तानि चन्द्रहासखड्गरूपतां प्राप्नुवन् । रत्नखचितः चन्द्रहासखड्गः दण्डः इव ऊर्ध्वमुखम् अतिष्ठत् ।

विजयदत्तः गायत्रीदेवीं भक्त्या प्रणम्य चन्द्रहासखड्गम् उन्नीय नेत्राभ्यां तस्य स्पर्शं कृतवान् । तावता पद्मशिल्पं पूर्वतनीम् एव स्थितिं प्राप्नोत् । वेदपण्डिताः मन्त्रान् पठन्तः

तस्यां रात्रौ राजा श्रीदत्तः निश्चिन्ततया निद्रां कृतवान् । किन्तु मध्यरात्रे उत्पन्नस्य कस्यचित् शब्दस्य कारणतः तस्य जागरणं जातम् । पूर्वं यः कपोतः श्रीलेखायाः आगमनस्य अनन्तरदिने आगतः आसीत् सः एव अद्यापि आगत्य वातायने उपविश्य पक्षौ चालयन् शब्दम् उत्पादितवान् आसीत् । श्रीदत्तः यदा जागरितः तदा सः निर्भीकतया तस्य पार्श्वे आगत्य उपाविशत् । श्रीदत्तः तं प्रीत्या स्पृशन् तस्य पादे योजितं पत्रं स्वीकृतवान् ।

''स्वर्णसिंहासनाधीशस्य विजयदत्तस्य शुभम् आशंसावः आवाम्'' इत्येतस्य सन्देशस्य अधः वसुमती-माधवसेनयोः हस्ताक्षरम् आसीत् पत्रे । एतत् पत्रं पठितवतः श्रीदत्तस्य महान् सन्तोषः जातः । अनन्तरदिने उषसि एव सः पत्रागमनवार्तां पुत्राय स्नुषायै च प्रेषितवान् ।

ततः द्वित्राणां दिनानाम् अनन्तरं पूर्वयोजनानुगुणं कालिन्दी-चम्पक-कुन्ददेशीयाः नरेशाः कौण्डिन्यदेशम् आक्रमितुं ससैन्यम् आगताः । युद्धारम्भसमनन्तरम् एव माधवसेनस्य आज्ञानुगुणं कालिन्दीसेना चम्पकसेनायाः नाशने उद्युक्ता अभवत् । एतत् दृष्टवतः कुन्ददेशीयसैन्यस्य महत् आश्चर्यम् । किं प्रवर्तते इति झटिति केनापि न अवगतम् । किञ्चित्कालानन्तरं मरालभूपतिः अवगतवान् यत् माधवसेनः मित्रम् इव व्यवहरन् अस्माभिः सह अत्र आगत्य इदानीं शत्रुः इव

व्यवहरन् अस्मत्सेनाम् एव समूलं नाशयन् अस्ति इति ।

विजयदत्तेन यत् ऊहितम् आसीत् तदेव प्रवृत्तम् । 'माधवसेनः अपि शत्रुसेनानाशने उद्युक्तः अस्ति' इत्येतत् ज्ञातवतः तस्य महान् सन्तोषः जातः । सः चन्द्रहासखड्गं गृहीत्वा कल्याणीम् आरुह्य कालरुद्रः इव रणरङ्गं प्रविष्टवान् ।

अन्धकारप्रसारात् पूर्वम् एव चम्पकदेशीया सेना नष्टप्राया जाता । कुन्ददेशस्य सेनाधिपतिः शरणागतिं प्रार्थितवान् । चम्पकदेशीयः राजा मरालभूपतिः, युवराजः चक्रभूपतिः च सैनिकैः बद्धौ । तौ कारागारे स्थापितौ विजयदत्तेन ।

युद्धस्य समाप्तेः अनन्तरं माधवसेनः लज्जातिशयम् अनुभवन् जामातुः विजयदत्तस्य समीपम् आगत्य तदीयौ हस्तौ गृहीत्वा - ''विजय ! अहं स्वजनैः सह एव युद्धं कर्तुम् उद्युक्तः आसम् । सार्वभौमत्वं प्राप्तव्यम् इत्येषा आशा मां तादृशे निन्द्यकर्मणि प्रावर्तयत् । किन्तु सौभाग्य-वशात् अल्पे एव काले मया विवेकः प्राप्तः । अन्यथा मम सर्वनाशः अभविष्यत् । आत्मना कृतस्य दोषस्य विषये अहं लज्जाम् अनुभवामि । कृपया क्षन्तव्यः अहम्'' इति वदन् क्षमां याचितवान् ।

तदा विजयदत्तः मन्दहासं प्रकटयन् - ''अलं गतस्य विषये चिन्तनेन । एषः देशः अपि भवदीयः एव । ज्येष्ठस्य भवतः एतत् क्षमायाचनं सर्वथा न शोभते । भवता आशीर्वादेन अनुग्राह्याः वयम्'' इति उक्तवान् ।

एतस्मिन् युद्धे प्राप्तात् विजयात् विजयदत्तः न सन्तृप्तः । सः सेनया सह दिग्विजयार्थं प्रस्थितवान् । एषा वार्ता समग्रे दक्षिणापथे वेगेन प्रसृता । चम्पक-कालिन्दी-कुन्ददेशाः विजयदत्तस्य अधीनाः जाताः इति वार्तां सर्वे जानन्ति स्म । अतः यानि लघुराज्यानि आसन् तेषाम् अधिपतयः सर्वे विजयदत्तस्य चक्रवर्तित्वं, स्वस्य सामन्तत्वं च विरोधम् विना अङ्गीकृतवन्तः ।

एवं विजयदत्तः दक्षिणापथस्य समग्रस्य चक्रवर्ती जातः । पूर्वजैः यत् चक्रवर्तित्वं प्रदर्शितम् आसीत् तत् शौर्येण सम्पाद्य कुलस्य कीर्तिं वर्धितवान् सः ।

- *(समाप्तम्)*



# ९. मृत्युञ्जयः बालकः



"तात ! वयम् उत्सवानां विषये, तेषाम् आचरणविषये च औदासीन्यं दर्शयन्तः स्मः इति भाति खलु ? पर्वणां विषये वयम् अत्यल्पं जानीमः । एवं ननु ?" इति पृष्टवती चमेली ।

"वस्तुतः पर्वाणि विशिष्टोद्देशेन एव व्यवहारे अनीतानि । किन्तु बहवः तम् उद्देशं न जानन्ति । पर्वणां पृष्ठभूमौ आ सहस्त्राधिकवर्षेभ्यः अनुवर्तमाना कथा या भवति सा अपि न विस्मर्तव्या अस्माभिः" इति उक्तवान् देवनाथवर्यः ।

"तात ! एताः कथाः कथं निर्मिताः भवन्ति ? कथं च अनुवर्तन्ते ?" इति पृष्टवान् सन्दीपः ।

"एतस्य अनेकानि कारणानि । मुख्यं कारणं तु अनभिज्ञता । यदा कश्चित् घटनां न जानाति तदा अन्येन सा विवरणीया भवति । एवं भवति कथारम्भः । श्रावयितॄणाम् उत्साहः, श्रोतॄणाम् आसक्तिः, धार्मिकी श्रद्धा इत्यादयः कथायाः अनुवर्तनस्य हेतवः । उदाहरणार्थं भवान् भित्तौ स्थितं चित्रम् एव पश्यतु । तत् बीभत्सजनकम् इव अस्ति । एकः शिवं लक्ष्यीकृत्य पाशं क्षिप्तवान् । शिवस्य त्रिशूलं च तं दूरीकुर्वत् अस्ति ..."

"तात ! एतस्य चित्रस्य विषये कश्चन प्रश्नः प्रष्टव्यः इति अहम् अपि चिन्तयन् आसम् । चित्रे शिवस्य पृष्ठतः एकः सुन्दरः बालकः स्थितः अस्ति । नमस्कार-भङ्ग्या स्थितः अस्ति सः । किमर्थं तथा

# गौरव-गाथा



तिष्ठति सः ? एतद्विषये काचित् कथा तु स्यात् एव खलु ? का सा कथा ? किं वयं तां श्रोतुम् अर्हामः ?'' इति पृष्टवती चमेली ।

''भवत्याः आशयः अवगतः मया । तात ! कथां कथयतु इति खलु भवत्याः आदेशः ? अस्तु तावत्, कथां श्रावयामि'' इति उक्त्वा देवनाथवर्यः कथाम् आरब्धवान् -

''पूर्वं मृकण्डुः नाम महर्षिः आसीत् । सः अनपत्यः आसीत् । सन्तानप्राप्त्यर्थं सः बहूनि वर्षाणि यावत् शिवं ध्यायन् तपः कृतवान् । तस्य तपसा सन्तुष्टः शिवः प्रत्यक्षीभूय मृकण्डुमहर्षिम् अपृच्छत् - ''कीदृशं पुत्रम् इच्छति भवान् ? शताधिकवर्षजीविनं दीर्घायुष्कं मूर्खं पुत्रम्, उत द्वादश वर्षाणि जीविष्यमाणं गुणवन्तं पुत्रम् ?'' इति ।

मृकण्डुः किञ्चित् विचिन्त्य अवदत् - ''अल्पायुष्कः अपि गुणवान् एव पुत्रः भवतु मम'' इति ।

कालः गतः । मृकण्डुः मार्कण्डेय-नामकं पुत्रं प्राप्तवान् । यदा सः मार्कण्डेयः पञ्चवर्षीयः आसीत् तदा एव अपूर्वं ज्ञानसामर्थ्यं प्रदर्शितवान् । तेन मेलितुं दूरप्रदेशात् अपि विद्वांसः आगच्छन्ति स्म । मार्कण्डेयः स्वस्य ज्ञानशक्त्या शिष्ट-व्यवहारेण च सर्वेषां हृदयानि जयति स्म ।

अष्टवर्षीयः सः वेदार्थविवरणे समर्थः जातः आसीत् । पुत्रस्य एतत् अपूर्वं सामर्थ्यं दृष्ट्वा मृकण्डुः तत्पत्नी च सन्तुष्टौ भवतः स्म । किन्तु यदा सः दशवर्षीयः जातः ततः आरभ्य तयोः मुखमण्डले हासः विलुप्तः । तौ जानीतः स्म यत् इतः परं वर्षद्वयमात्रं जीविष्यति एषः इति । अतः तौ दुःखेन अश्रूणि स्रावयतः स्म । यदा पुत्रस्य आयुषः केचन मासाः एव अवशिष्टाः तदा तु तौ अश्रुधारां सोढुं न शक्तवन्तौ । एतत्सर्वं दृष्ट्वा मार्कण्डेयः

कदाचित् पितरं पृष्टवान् - ''तात ! ज्ञानिनः अपि भवतः मुखे अश्रुधारा किमर्थम् ? तादृशं किं प्रबलं दुःखं बाधते भवन्तम् ? या दृढमनस्का शान्तस्वभावा च इति ख्याता तस्याः मम मातुः अश्रुधारायाः विरामः किमर्थं न भवति ? किमर्थं सा स्वभाग्यं निन्दति ? कृपया एतस्य सर्वस्य कारणं किम् इति वदतु । अहं तत् दुःखं निवारयिष्यामि'' इति ।

तदा दुःखमिश्रित-स्वरेण एव मृकण्डुः अवदत् - ''वत्स ! आवयोः दुःखस्य निवारणं कर्तुं न शक्यते भवता । भवन्तम् अधिकृत्य एव शोचावः आवाम्'' इति ।

''किम् अहम् एव भवतोः दुःखस्य कारणम् ? श्रेष्ठयोः मातापित्रोः भवतोः दुःखं जनयता मया किं वा पातकं कृतम् ? को वा दोषः अनुष्ठितः ?'' इति आश्चर्येण अपृच्छत् मार्कण्डेयः ।

''भवता न किमपि पातकं कृतं वत्स ! वस्तुतः विद्वांसम्, आज्ञाकारिणं भवन्तं पुत्रत्वेन प्राप्य आवाम् आत्मानं धन्यं मन्यावहे । ऋते भवतः, आवयोः जीवितं शून्यम् । प्राणरहितं शरीरं शवः भवति यथा, तथा भवद्विरहितौ आवां जीवच्छवौ भविष्यावः । अथवा भवद्वियोग-प्राप्त्यनुक्षणम् एव आवयोः मरणम् अपि सम्भवेत् । एतत्सर्वं स्मरतोः महत् दुःखम् आवयोः'' इति उक्त्वा तदीयजन्मकथां विस्तरेण श्रावितवान् मृकण्डुमहर्षिः ।



सर्वं श्रुत्वा मार्कण्डेयः किञ्चित्-कालं मौनेन स्थितवान् । तदनन्तरं सः मनसि किमपि सङ्कल्प्य अवदत् - ''तात ! एतद्विषये इतःपरं भवद्भ्यां चिन्ता करणीया नास्ति । यथोचितम् अहं करिष्यामि । अहम् आशीर्वादेन अनुग्रहणीयः भवद्भ्याम्'' इति । ततः सः मातापित्रोः आशीर्वादं प्राप्य कुटीरात् निर्गतवान् ।

शान्ते परिसरे उपविश्य सः तपः आरब्धवान् । सः निर्गमनात् पूर्वम् एव मातापितरौ मित्राणि च सूचितवान् आसीत् यत् मम तपसि केनापि विघ्नः न करणीयः इति । सः शिवं ध्यायन् घोरे तपसि निमग्नः

अभवत् । तस्य तपः तावत् उग्रम् आसीत् यत् अल्पे एव काले सः शिवत्वम् एव प्राप्तवान् । 'शिवः' नाम मङ्गलम् । तस्य समापनं केनापि न शक्यते । शिवत्व-प्राप्त्यनन्तरं मार्कण्डेयः समयं, जन्म, मरणं च स्वाधीनीकृतवान् ।

यदा मार्कण्डेयस्य द्वादशं वर्षम् अतीतं तदा तदीयात् मानवशरीरात् आत्मतत्त्वं पृथक्कर्तुं काश्चन शक्तयः तत्समीपम् आगताः । किन्तु ताभिः तत्र मार्कण्डेयः न दृष्टः । मार्कण्डेयः तु शिवत्वं प्राप्य शिवाभेदं प्राप्तवान् आसीत् खलु ? अतः ताभिः शिवः एव दृष्टः, न तु मार्कण्डेयः । अतः ताः प्रतिगतवत्यः ।

मरणावधिः यदा अपगतः तदा नवं रूपं प्राप्य मार्कण्डेयः नेत्रे उन्मीलितवान् । गभीरनिद्रातः इव समाधिस्थितितः बहिः आगतवान् सः ।

सप्तर्षयः तेन मार्गेण गच्छन्तः आसन् । मार्कण्डेयः तान् भक्त्या नमस्कृतवान् । ते आशीर्वादं कृतवन्तः - 'दीर्घायुष्मान् भव' इति । एतत्कारणतः मार्कण्डेयः दीर्घायुष्यं प्राप्तवान् ।''

एतत् पौराणिकाख्यानं शृण्वन्तौ सन्दीपः चमेली च आश्चश्चर्यसागरे निमग्नौ । तौ ततः उत्थातुम् एव न इच्छतः स्म । किन्तु देवनाथवर्येण मित्राणां मेलनार्थं गन्तव्यम् आसीत् । अतः सः कथां समापितवान् ।

सः अवदत् - ''वत्सौ ! यस्य चित्रस्य विषये वयं चर्चां कुर्वन्तः आस्म तस्य तात्पर्यं किमिति भवन्तौ अवगतवन्तौ खलु ? यत्र मृत्युः विजितः, यत्र 'शिवोऽहम्' इत्येतस्य तत्त्वस्य प्राधान्यं तत् तत्त्वं सर्वैः न अवगम्यते । अतः एव एतस्याः घटनायाः कथात्वं कल्पितं प्राचीनैः । 'यमराज-शिवयोः कलहः प्रवृत्तः, अन्ते सत्यस्य एव विजयः जातः' इति वदति सा पौराणिकी कथा'' इति ।

''आवाभ्यां कथा अपि अवगता । कथायाः पृष्ठभूमिकायां स्थितं तत्त्वम् अपि अवगतम्'' इति उक्तवन्तौ सन्दीपः चमेली च ।





# एकरूप्यकसमस्या

निरञ्जनपुरग्रामस्य साप्ताहिकवाणिज्यं प्रति आगत्य समीपग्रामस्थाः जनाः सप्ताहस्य निमित्तं यावन्ति आवश्यकानि तावन्ति वस्तूनि क्रीत्वा नयन्ति स्म । तस्मिन् एव ग्रामे अवतारस्य एकः आपणः आसीत् । तत्र तण्डुलः, लवणं, तैलम् इत्यादीनां पाकपदार्थानां विक्रयणं भवति स्म ।

वीरभद्रः कश्चन धनिकः । सः सर्वाणि वस्तूनि तस्मात् एव आपणात् क्रीणाति स्म । अवतारे तस्य पूर्णविश्वासः आसीत् । अतः अवतारः यावत् धनं पृच्छति, तावत् विना प्रश्नं ददाति स्म सः ।

एकदा धनदानसमये तस्य समीपे एकरूप्यकस्य न्यूनता दृष्टा । तदा सः अवतारम् उक्तवान् - "एकरूप्यकम् अग्रिमसप्ताहे स्वीकरोतु । अहं विस्मरणशीलः अस्मि, अतः भवान् एव स्मारयित्वा स्वीकरोतु तत्" इति ।

अवतारः वाणिज्यनिपुणः । धनस्य दाने स्वीकरणे च तस्य कोऽपि सङ्कोचः न भवति स्म । अतः यदा वीरभद्रः पुनः वस्तूनि स्वीकर्तुम् आगतवान् तदा अवतारः तस्मात् एकं रूप्यकं स्वीकृतवान् ।

केषाञ्चित् दिनानाम् अनन्तरं वीरभद्रः यदा पुनः वस्तूनि क्रीत्वा धनं च दत्त्वा गच्छन् आसीत् तदा अवतारः विनयपूर्वकम् उक्तवान् - "वीरभद्रवर्य ! भवत्तः मया एकं रूप्यकं प्राप्तव्यम् अस्ति" इति । एतत् श्रुत्वा वीरभद्रः आश्चर्यचकितः । तथापि क्षणकालं चिन्तयित्वा सः एकं रूप्यकं दत्तवान् ।

कतिचन सप्ताहाः अतीताः । तदा अवतारः पुनः अपि धनं पृष्टवान् । वीरभद्रः यद्यपि सम्यक् स्मरति स्म यत् अहम् एतावता एव द्विवारम् एकैकं रूप्यकं दत्तवान् अस्मि इति, तथापि सः मौनेन पुनरपि तस्मै एकं रूप्यकं दत्तवान् । एषः एव क्रमः पुनः पुनः प्रवृत्तः । अवतारः प्रतिसप्ताहम् अपि वस्तूनां मूल्यं प्राप्य, एकं रूप्यकम् अपि आधिक्येन पृच्छति स्म । वीरभद्रः विना प्रतिवचनं तत्

दत्त्वा गच्छति स्म ।

अवतारस्य एषः व्यवहारः तस्मै न अरोचत । सः कदाचित् चिन्तितवान् - 'अवतारः लोभी अभवत् । पुनः पुनः विस्मरणं तु भवितुं न अर्हति । सः बुद्ध्या एव वञ्चनं कुर्वन् अस्ति । मम सज्जनत्वस्य दुर्लाभं स्वीकुर्वन् अस्ति । मया इतोऽपि अग्रे तस्य एषा प्रवृत्तिः न सोढव्या' इति । अतः यदा अवतारः पूर्वतन-ऋणत्वेन पुनः एकं रूप्यकं प्रार्थितवान् तदा वीरभद्रः क्रुद्धः सन् उक्तवान् - ''भोः, अहम् एतावता एव बहुवारं भवते एकं रूप्यकं दत्तवान् अस्मि । इतोऽपि कतिवारं दातव्यं स्यात् इति तु न ज्ञायते'' इति ।

''एकं रूप्यकं प्रत्यर्पितम् अस्ति एव इति सम्यक् स्मरन् अपि भवान् किमर्थं वा यदा यदा मया धनं याचितं तदा सर्वदा तत् दत्तवान् ?'' इति अवतारः हसन् पृष्टवान् ।

वीरभद्रः क्षणकालं अवतारस्य मुखं दृष्ट्वा हसन् उक्तवान् - ''मम धनप्रत्यर्पणानन्तरं यदा भवान् प्रथमवारं धनं पृष्टवान् तदा अहं चिन्तितवान् यत् प्रायः अहमेव प्रत्यर्पणं विस्मृतवान् स्याम् इति । अहं तु विस्मरणशीलः अस्मि एव । अतः द्वितीयवारं यदा भवता धनं पृष्टं तदा अहं चिन्तितवान् यत् कार्यव्यग्रः भवान् मया कृतम् ऋण-प्रत्यर्पणं विस्मृतवान् स्यात् इति । अतः मौनेन पुनः एकं रूप्यकं दत्तवान् । पुनरपि भवता यदा धनं पृष्टं तदा भवतः विस्मरणशीलतां निन्दन् अहम् एकं रूप्यकं दत्तवान् । तथापि भवता पुनः पुनः धनं पृष्टम् । तदा मयि कुतूहलम् उत्पन्नं यत् भवान् कियत्कालपर्यन्तं मत्तः पूर्वतनऋणत्वेन एकं रूप्यकं प्राप्नुयात् इति द्रष्टव्यम् इति । अतः भवता यदा यदा



पृष्टं तदा सर्वदा प्रतिवचनं विना धनं दत्तम् । किन्तु अद्य मम सहना समाप्ता । अतः मया विरोधः कृतः'' इति ।

एतत् श्रुत्वा अवतारः हसन् उक्तवान् - ''प्रथमवारं भवान् धनं यत् दत्तवान्, तद् अहं विस्मृतवान् आसम् । अतः द्वितीयवारं पृष्टवान् । किन्तु धनस्वीकारसमये भवतः मुखस्य दर्शनात् एव अहं ज्ञातवान् यत् अहं विस्मृत्य द्वितीयवारं पृष्टवान् इति । अग्रिमसप्ताहे यदा भवान् आगतवान् तदा भवतः प्रतिक्रियां ज्ञातुम् अहं बुद्ध्या पुनः गम्भीरतापूर्वकम् एकं रूप्यकं पृष्टवान् । किन्तु भवान् विना प्रश्नं पुनः एकं रूप्यकं दत्त्वा गतवान् । एतत् दृष्टवतः मम आश्चर्यम् अभवत् । अहं ज्ञातवान् यत् भवान् सङ्कोचवशात् किमपि अनुक्त्वा एकं रूप्यकं दत्त्वा गच्छन् अस्ति इति । पुनः पुनः अनुचितरूपेण एकं रूप्यकं यत् अहं याचन् अस्मि ततः भवति काचित् कोपादिप्रतिक्रिया भवतु इति मयि विलक्षणा इच्छा उत्पन्ना । एवं भवतः प्रतिक्रियां द्रष्टुमेव तदनन्तरकाले बहुवारम् अहम् एकरूप्यकं पृष्टवान् । भवान् कियत्कालं विना प्रतिवचनं मौनेन धनं दद्यात् इति द्रष्टव्यम् एव इति मयि प्रबला इच्छा आसीत् । दुष्टकुतूहलस्य कारणतः मया भवते महत् कष्टं दत्तम् । तदर्थं क्षमां प्रार्थये । भवद्धनं मत्समीपे सुरक्षिततया अस्ति'' इति ।

एतावत् उक्त्वा अवतारः गृहस्य अन्तः गत्वा एकं धनस्यूतम् आनीय वीरभद्राय दत्त्वा अवदत् - ''धनस्य दाने स्वीकरणे वा मित्र-बान्धवादिसम्बन्धाः मनसि न स्थापनीयाः । विना सङ्कोचं धनं प्राप्तव्यं दातव्यं वा । तदा एव पारस्परिकसम्बन्धः रक्षितः भवति । सङ्कोचशीलः जनः किमपि वक्तुं न प्रभवति । किन्तु मनसि एव सः अन्यस्य व्यवहारं निन्दन् भवति । भवतः सङ्कोचशीलतां निवारयितुम् एव अहं भवत्तः पुनः पुनः धनं पृष्टवान् । कृपया क्षन्तव्यः अहम्'' इति ।

वीरभद्रः अवतारस्य व्यावहारिकीं दृष्टिं प्रंशसन् उक्तवान् - ''भवादृशः व्यावहारिक-दृष्टियुक्तः जनः मम मित्रम् अस्ति यत् तत् मम महते सन्तोषाय'' इति ।



योग्येन क्रमेण कथासमाप्तिं संसूच्य पुरस्कारः प्राप्यताम्

# सर्जनात्मिका स्पर्धा

*अधः एकस्याः कथायाः आरम्भः दत्तः अस्ति । उत्तमां कथां रचयितुं अपेक्षितानि उपादानकारणानि सर्वाणि सन्ति तत्र । तानि उपयुज्य कथायाः पूर्णः आकारः परिकल्पनीयः भवद्भिः । कथासमाप्तेः विभिन्नान् प्रकारान् चिन्तयित्वा योग्यां चित्वा लिखन्तु । योग्या शीर्षिका अपि देया । स्मर्तव्यम् अत्र यत् कथाशेषः १५०-२०० शब्दैः एव रचनीयः । चितायै रचनायै पुरस्कारः दास्यते । सा कथा पत्रिकायां प्रकाशयिष्यते च । एतस्यां स्पर्धायां बालाः एव भागं ग्रहीतुम् अर्हन्ति, न ज्येष्ठाः । कथया सह नाम, सङ्केतं, वयः, कक्ष्यां, विद्यालयनाम, पत्रालयसङ्ख्यां (पिन् कोड्) च विलिख्य - **चन्दमामा (संस्कृतम्), अक्षरम्, ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५** इत्येतस्मै सङ्केताय प्रेषयन्तु ।*

प्रजानां कष्टसुखादिकं ज्ञातुम् इच्छन् राजकुमारः प्रतापः कदाचित् सामान्यवेषं धृत्वा प्रासादात् निर्गतवान् । किञ्चिद्दूरं गत्वा सः अश्वात् अवतीर्य पादाभ्यां प्रस्थितवान् । किञ्चिद्दूरं यदा गतं तदा तस्य एका पादरक्षा भग्ना । अतः सः अपराम् अपि पादात् अपनीय नग्नपादः सन् अग्रे गतवान् । एवं गमनसमये तस्य पादे एकं कण्टकं लग्नम् । सः कस्यचित् वृक्षस्य अधः उपविश्य कण्टकस्य अपनयनार्थं प्रयासं कृतवान् । किन्तु कण्टकम् अपनेतुं न शक्तं तेन । वेदनाम् अनुभवन् सः 'साहाय्यार्थं कोऽपि लभ्यते किम् ?' इति प्रतीक्षमाणः उपविष्टवान् ।

तावता तेन मार्गेण एका कृषिककन्या आगता । सा पितुः निमित्तं क्षेत्रं प्रति भोजनं नयन्ती आसीत् । साहाय्यम् अपेक्षमाणः वेदनाम् अनुभवन् राजकुमारः तया दृष्टः । सा तत्समीपं गत्वा अपरेण कण्टकेन राजकुमारपादे लग्नं कण्टकम् अपनीतवती । वृक्षस्य पर्णैः रसं निष्कास्य पादतले लेपितवती । शाटिकाञ्चलस्य दशां छित्त्वा तां पट्टिकारूपेण राजकुमारस्य पादे बद्धवती च ।

''आर्ये ! नितराम् उपकृतः अस्मि । अहं भवत्याः किं साहाय्यं कर्तुं शक्नुयाम् ?'' इति अपृच्छत् राजकुमारः ।

''यः स्वस्यैव साहाय्यं कर्तुं न शक्नोति, यः कण्टक-वेधनमात्रेण एव एवम् असहायः जातः, सः अन्यस्य साहाय्यं किं वा कुर्यात् ?'' इति पृष्टवती कृषिकपुत्री ।

तदा राजकुमारः अवदत् - ''मया ऐदम्प्राथम्येन पादाभ्यां गच्छता कण्टकवेधः प्राप्तः । कण्टकस्य अपनयनक्रमम् अहं न जानामि स्म । साहाय्यदानेन उपकृतवत्याः प्रत्युपकारः मम धर्मः खलु ?'' इति ।

''महाराजः इव वदति खलु भवान् ? किं भवान् मां राज्ञीं कर्तुं शक्नुयात् ?'' इति पृष्टवती सा कृषिककन्या ।

राजकुमारेण स्वस्य वास्तविकः परिचयः न दत्तः । 'प्रत्युपकारः तु मया करणीयः एव' इति दृढसङ्कल्पं कृतवान् सः । किन्तु एतावता सा कृषिककन्या अवगतवती यत् अयं राजकुमारः एव इति ।

*किं राजकुमारः तां राज्ञीं कृतवान् ? किं तस्याः इच्छा तेन पूरिता ? एतान् अंशान् मनसि निधाय कथासमाप्तिं चिन्तयित्वा लिखित्वा* **डिसेम्बर्मासस्य २५ दिनाङ्कतः पूर्वं** *प्रेषयन्तु । पुरस्कृता रचना जनवरीसञ्चिकायां प्रकाशयिष्यते ।*

- सम्पादकः

## अगस्ट् - २००० अङ्के प्रकाशितानां प्रश्नानाम् उत्तराणि

१. अ. आर्यभटः ।
   आ. अमरनाथस्थम् (काश्मीरराज्ये) ।
   इ. नचिकेताः ।
   ई. चार्वाकः, जबालः (सत्यकामजाबालात् अन्यः), गोशालः च ।
   उ. अकबरः । 'सः दीन्-ए-इलाही'-नामकं मतं स्थापितवान् ।
२. रुरुः, प्रमद्वरा च ।

# सर्जनात्मकस्पर्धा

*गङ्गापुरराज्यस्य उद्यानस्य पालकः कदाचित् कार्यविशेषस्य निमित्तं ग्रामान्तरं गन्तुम् इष्टवान् । गमनसमये सः जलसेचनकार्यं वानरेभ्यः समर्प्य गतवान्, ये च तेन सह मैत्र्या व्यवहरन्ति स्म । उद्यानपालकस्य निर्गमनस्य अनन्तरदिने वानराः जलसेचनकार्यम् आरब्धवन्तः । तदवसरे तैः सन्देहः प्राप्तः यत् सस्येभ्यः यावत् आवश्यकं तावत् जलं दीयमानम् अस्ति, उत न इति । वानराः समस्यानिवारणं कथं कृतवन्तः ?*

## प्राप्तपुरस्कारा रचना

# मैत्र्याः लाभः

वानरनायकः चिन्तने मग्नः जातः । अन्ये वानराः स्वकीयं कार्यं समाप्य शाखाः आरुह्य कूर्दनादिषु मग्नाः जाताः । तदा वानरनायकः सर्वान् मेलयित्वा स्वसमस्यां निवेदितवान् । एतत् श्रुत्वा अन्ये अपि वानराः सन्देहं प्राप्तवन्तः यत् वयं यत् जलं दत्तवन्तः तत् पर्याप्तम्, उत न इति । ते निर्णयं कर्तुं न शक्तवन्तः । तदा कश्चन वृद्धः वानरः अवदत् - ''सन्देहनिवारणार्थम् अस्ति कश्चन मार्गः । सस्यानि उत्पाट्य यदि मूलानि परिशील्यन्ते तर्हि अस्माकं समस्या परिहृता स्यात् । किन्तु तथा कृतं चेत् सस्यानि मरणं प्राप्नुयुः । उद्यानपालकेन तु तानि प्रेम्णा वर्धितानि । अतः सस्यानाम् उत्पाटनं युक्तं न'' इति ।

एतत् श्रुत्वा वानरनायकः अवदत् - ''मित्राणि ! उत्तमसस्यैः सह कानिचन अनपेक्षितसस्यानि अपि सन्ति एव उद्याने । तानि उत्पाट्य परिशीलयामः चेत् अपि अस्माकं समस्या परिहृता भवेत् । अनपेक्षितसस्यस्य उत्पाटनतः उत्तमसस्यानि पुष्टानि भवेयुः'' इति ।

एतत् अङ्गीकृत्य सर्वे वानराः वृक्षात् अधः आगत्य सर्वाणि अनपेक्षितसस्यानि उत्पाटितवन्तः । तेषां सर्वेषां मूलानि जलेन आर्द्राणि आसन् एव । अतः तैः निर्णीतं यत् उत्तमसस्यैः पर्याप्तमात्रेण जलं प्राप्तम् इति । ते तृप्त्या पुनः वृक्षान् आरूढवन्तः ।

उद्यानपालकः दिनद्वयानन्तरं प्रत्यागतः । कान्त्या विलसन्ति सस्यानि दृष्ट्वा सः नितरां सन्तुष्टः । कुसस्यानि उत्पाटितानि आसन् इत्यतः उद्यानशोभा प्रवृद्धा आसीत् । एतत् तु तस्मिन् आश्चर्यं सन्तोषातिशयं च अजनयत् ।

ततः आरभ्य उद्यानपालकस्य वानराणां च स्नेहः गाढतां गतः ।

**- के. साहितिः**



# तैलपेषण्याः वृषभः

रामपुरस्य धनिकवणिजः प्रतापस्य एकमात्रपुत्रः आसीत् । तस्य नाम कमलः इति । बाल्यकालतः सः नगरे स्थितस्य मातुलस्य गृहे वसन् शिक्षणं प्राप्नुवन् आसीत् । प्रतापः पुत्रे विशेषप्रीतिमान् आसीत् । अतः यदा कमलः धनम् अपेक्षते तदा सत्वरं धनं प्रेषयति स्म प्रतापः । यथेष्टं धनं प्राप्यते स्म इत्यतः कमलः दुरभ्यासैः ग्रस्तः अभवत् । तस्य मैत्री अपि उत्तमैः सह न आसीत् । मातुलात् अपि तस्य भयं न आसीत् । पठने अपि तस्य आसक्तिः न आसीत् । कथञ्चित् पठनं समाप्य सः रामपुरं प्रत्यागतवान् । नगरे अहं पठनं कृतवान् इति चिन्तयन् सः अहङ्कारम् अनुभवति स्म । तस्य अहङ्कारः सर्वदा मुखात् निस्सरति स्म । कारणं विना इतरैः सह चर्चां करोति स्म सः । सर्वदा 'उत्तमस्थाने अस्मि' इत्येतं भावं वचनैः दर्शयति स्म । इतरेषां सम्भाषणे वस्तुषु वा सर्वदा दोषं प्रदर्शयति स्म । तेषाम् अवमाननम् अपि करोति स्म ।

कदाचित् सः लघुमार्गेण गच्छन् आसीत् । तदा सः शङ्करनामकं कञ्चित् युवकं दृष्टवान् । तस्य युवकस्य हस्ते पट्टिका बद्धा आसीत् । तं दृष्ट्वा कमलः झटिति पृष्टवान् - ''किं भोः, पट्टिका किमर्थं बद्धा अस्ति हस्ते ?'' इति ।

सः युवकः विनयेन उक्तवान् - ''कुत्रचित् पतितवान्'' इति ।

कमलः पृष्टवान् - ''कथं पतितवान् ?''

सः उक्तवान् - ''धावन् पतितवान्'' इति ।

पुनश्च कमलः पृष्टवान् - ''किमर्थं भवान् धावति स्म ? तादृशी का आवश्यकता



आपतिता ?'' इति ।

शङ्करः अवदत् - ''कस्यचित् शुनकस्य पुच्छस्य उपरि मया अनवधानेन पादः स्थापितः'' इति ।

कमलः अपृच्छत् - ''भवता शुनकः न दृष्टः किम् ?'' इति ।

शङ्करः अवदत् - ''किमपि चिन्तयन् चलामि स्म'' इति ।

कमलः पुनः पृष्टवान् - ''कस्मिन् विषये चिन्तयन् आसीत् भवान् ?'' इति ।

शङ्करः उक्तवान् - ''कोऽपि विशेषविषयः नासीत् । एवमेव चिन्तयन् आसम् ।''

कमलः पुनश्च पृष्टवान् - ''तदेव पृच्छन् अस्मि खलु - चिन्तनविषयः कः इति'' इति ।

शङ्करः खिन्नः सन् अनुत्साहेन उक्तवान् - ''गृहसम्बद्धायाः समस्यायाः विषये'' इति । ततःपरमपि द्वयोः मध्ये वार्तालापः अनुवृत्तः एव । कमलः पुनः अपृच्छत् - ''धावन-समये भवान् कथं पतितवान् ?'' इति ।

''कुत्रचित् मम पादः स्खलितः अभवत् । पतितवान् । तावदेव'' इति उक्तवान् शङ्करः ।

कमलः अपृच्छत् - ''स्खलनेन कथं पतितम् ? किं पादः शिलया घट्टितः ?'' इति ।

शङ्करः उक्तवान् - ''मया न दृष्टम्'' इति । पुनश्च कमलः - ''भवतु नाम । किन्तु एतत् वा वदतु - वामहस्तः एव किमर्थं व्रणितः ? दक्षिणहस्तः कथं सुरक्षितः अतिष्ठत् ?'' इत्येवं प्रश्नवर्षणमेव कृतवान् ।

शङ्करः तीक्ष्णदृष्ट्या तं पश्यन् ततः पलायितुम् उद्युक्तः । कमलः तं गृहीत्वा - ''पश्यतु, पुनश्च भवान् दोषं कुर्वन् अस्ति । शुनकस्य पुच्छे पादस्थापनपूर्वकं भवता प्रथमः दोषः कृतः । यदा सः शुनकः भवन्तम् अनुसृतवान् तदा भवान् धावितवान् । एषः द्वितीयः दोषः । इदानीं धावनम् इच्छति खलु । एषोऽपि दोषः एव'' इति अवदत् ।

''श्रीमन्, एकवारं क्षाम्यतु । मुञ्चतु माम् । इतःपरं कदापि एतादृशाः दोषाः न क्रियन्ते'' इति उक्त्वा ततः निर्गतवान् शङ्करः ।

पुनः कदाचित् कमलः मित्रैः सह कस्मिंश्चित् मार्गे गच्छन् आसीत् । तदा तस्य दृष्टिः भैरवस्य तैलपेषण्याः उपरि पतिता । इतस्ततः दर्शनं विना तैलपेषण्याः वृषभः यन्त्रं परितः भ्रमति स्म । भैरवः ततः किञ्चिद्दूरे उपविश्य वृषभाय पिण्याकं सज्जीकुर्वन्

आसीत् । कमलः भैरवं पीडयितुम् इष्टवान् । सः मित्रैः सह भैरवस्य समीपं गतवान् । भैरवः कमलस्य विषये पूर्वमेव जानाति स्म । अतः सः कमलेन सह सम्भाषणसमये अत्यन्तं जागरूकतया तेन पृष्टस्य प्रश्नस्य उत्तरं ददाति स्म । कमलः अपृच्छत् - ''भैरव, तैल-पेषण्याः वृषभस्य आहारार्थं किमर्थम् एतावान् व्ययः क्रियते ? तादृशं महत् कार्यं किं वा करोति सः ?'' इति ।

''किमर्थं न करणीयम् ? यदा मम इच्छा तदा यन्त्रं परितः भ्रमन् तैलम् उत्पादयति खलु सः'' इति उक्तवान् भैरवः ।

''यदा भवान् पुरतः तिष्ठति तदा सः निरन्तरं भ्रमेत् । किन्तु भवान् यदा गृहस्य अन्तः गतः स्यात् तदा सः भ्रमणं स्थगयित्वा एकत्र तिष्ठेत् खलु ?'' इति पृष्टवान् कमलः ।

भैरवः उक्तवान् - ''तदर्थम् एव मया तस्य कण्ठे घण्टा बद्धा अस्ति । अहम् अन्यत् कार्यं कुर्वन् भवामि चेत् अपि घण्टानादेन एव अहं ज्ञातुं शक्नोमि यत् वृषभः स्थितवान् उत भ्रमति इति'' इति ।

''वृषभः एकत्र एव स्थित्वा शिरः चालयन् यदि भवेत् तर्हि घण्टानादः तु श्रूयेत एव । तदा भवान् कथं ज्ञातुं शक्नुयात् तस्य वञ्चनाम् ?'' इति पृष्टवान् कमलः ।

कमलस्य प्रश्नेन कुपितः भैरवः कटुस्वरेण - ''मां वञ्चयितुं सः अध्ययनं कृत्वा नगरात् आगतः न खलु ? पश्यतु कमलवर्य ! यः कार्यरहितः इतस्ततः भ्रमति, व्यर्थं वीथ्यां सञ्चरन् कालहरणं करोति, तं तैलपेषण्याः वृषभेन तोलयन्ति । किन्तु मम दृष्ट्या एवं तोलनं न उचितम् । यतः तैलपेषण्याः वृषभस्य भ्रमणेन तैलं वा निष्पादितं भवति । एतादृशस्य तुलना अलसैः सह यत् क्रियते तत् तु अनुचितम् एव'' इति उक्तवान् ।

भैरवस्य उत्तरं श्रुत्वा कमलस्य मित्रैः हसितम् । कमलः लज्जया शिरः अवनमय्य ततः निर्गतवान् । तदारभ्य सः अहङ्कार-वचनानां कथनं, निष्कारणचर्चां च पूर्णतः परित्यक्तवान् । वाणिज्ये पितुः साहाय्यं कुर्वन्, केषुचित् एव दिनेषु सः उत्तमः वणिक् अभवत् ।



# कष्टस्य श्रवणेन किम् ?

कदाचित् ग्रीष्मकाले रामपुरस्य सर्वे कूपाः शुष्काः जाताः । अतः ग्रामे महान् जलाभावः उत्पन्नः । ग्रामात् बहिः एकस्मिन् कासारे जलम् आसीत् । जनाः ततः जलम् आनयन्ति स्म । कृष्णनामकः कृषिकः दशभ्यः गृहेभ्यः जलम् आनीय ददाति स्म प्रतिदिनम् । प्रतिफलरूपेण एकैकस्मात् गृहात् दश रूप्यकाणि प्राप्नोति स्म । सः स्वकार्यं श्रद्धया करोति स्म । कस्यापि गृहस्य अनानुकूल्यं यथा न भवेत् तथा जलं प्रापयति स्म ।

एकदा तस्य पादे कण्टकं लग्नम् । अतः सः तस्मिन् दिने किमपि गृहं यथासमयं जलं प्रापयितुं न शक्तवान् । तथापि गृहजनाः प्रतिमासं यावत् धनं दातव्यं तावत् धनं दत्तवन्तः एव मासान्त्ये । किन्तु वीरबाहुः नाम कश्चन कृपणः एकस्य दिनस्य धनं न्यूनीकृत्य एव मासिकं धनं दत्तवान् ।

तदा कृष्णः तं निवेदितवान् - ''मया प्रतिदिनं भवद्गृहं प्रति समये एव जलम् आनीय दत्तम् । एकस्मिन् एव दिने कण्टकवेधकारणतः तथा कर्तुं न शक्तम् । तदर्थं मासिकधने न्यूनीकरणं न उचितम्'' इति ।

''भवतः कष्टं भवदीयम् । तस्य मम च न कोऽपि सम्बन्धः । भवता यावत्सु दिनेषु जलं प्रापितं तावताम् एव दिनानां धनम् अहं दास्यामि'' इति निर्दाक्षिण्यम् उक्तवान् वीरबाहुः । कृष्णः ततः मौनेन निर्गतवान् ।

एकदा वीरबाहोः गृहं प्रति बहवः अतिथयः आगताः । तस्मिन् दिने कृष्णः उद्देशपूर्वकम् एव जलं न प्रापितवान् । अनन्तरदिने वीरबाहुः कोपेन ज्वलन् अगर्जत् - ''धिक् भवन्तम् । ह्यः जलं न प्रापितम् इत्यतः मम कियत् कष्टम् अभवत् इति किं भवान् जानाति ?'' इति ।

''भवतः कष्टस्य श्रवणेन मम किम् ? यस्मिन् दिने मया जलं न प्रापितं तस्य दिनस्य धनं भवान् मा ददातु'' इति कृष्णः शान्तस्वरेण उक्तवान् ।

एतत् श्रुत्वा वीरबाहुः निरुत्तरः जातः ।





# रङ्गस्य कथा

रङ्गः आ बाल्यात् एव कथाश्रावणे उत्सुकः । किन्तु तेन उच्यमानां नीरसां सुदीर्घां कथां श्रोतुं कोऽपि न इच्छति स्म । सर्वे समयाभावं कार्यान्तरव्यग्रतां च कथयन्तः तस्य कथाश्रवणम् उपायेन निवारयन्ति स्म ।

सः पितरं कथां श्रावयितुम् इच्छति । किन्तु पिता कृषिकार्ये व्यग्रः सन् कथाश्रवणार्थं समयं न प्राप्नोति । पाकादिषु गृहकार्येषु व्यग्रा माता अपि समयं न प्राप्नोति । पितामहः गीतारामायणादीनां पठने सदा निरतः भवति । पितामही तु अन्येषां निन्दने निरता सती समयाभावं सदा अनुभवति । रङ्गः भगिनीम् एव कथां श्रावयितुम् इष्टवान् । तदा सा उक्तवती - ''भवतः नीरसकथाश्रवणे मम समयः सर्वथा नास्ति । स्वस्य अलङ्कारार्थं, भाविजीवनस्य सुन्दरान् स्वप्नान् द्रष्टुं वा एव मम समयः अपर्याप्तः । एवं स्थिते भवतः कथां श्रोतुं मम कुत्र समयः ?'' इति ।

तस्य मित्राणि अपि तदीयां कथां श्रोतुं न इच्छन्ति स्म । यदा सः कथायाः आरम्भं करोति तदा कमपि व्याजम् उक्त्वा ततः पलायन्ते स्म । महाभारतकथातः अपि दीर्घाः भवन्ति स्म तदीयाः कथाः । महाभारतकथा तु रोचिका श्रवणमनोहरा च भवति । किन्तु रङ्गस्य कथायां न तथा । न उद्देशः स्पष्टः, न पात्राणां श्रेष्ठता । घटनाः योजयन् कथां विस्तारयति स्म सः । कस्य का गतिः, कस्य कुत्र सम्बन्धः इत्यादिकं केनापि न ज्ञायते स्म ।

श्रोतॄणाम् अभावतः रङ्गः महान्तं खेदम् अनुभवति स्म । अतः सः धनदानस्य आशाम् उत्पाद्य भिक्षुकान् कथाश्रवणे नियोजितवान् । किन्तु ते अपि सप्ताहाभ्यन्तरे एव कथाश्रवणात् जुगुप्सिताः सन्तः, 'कथाश्रवणात्



अपि बुभुक्षया मरणम् अपि वरम् एव' इति वदन्तः पलायितवन्तः ।

एतेन रङ्गस्य दुःखम् इतोऽपि प्रवृद्धम् । बहुधा चिन्तनानन्तरं तस्य मनसि कश्चन विचारः स्फुरितः । पिशाचाः कथाश्रवणे उत्साहिनः भवन्ति इति सः कदाचित् पितामहीमुखतः श्रुतवान् आसीत् । अतः सः एकदा श्मशानं गतवान् । सः कथाश्रावणार्थम् आगतः इति ज्ञात्वा पिशाचाः सन्तुष्टाः । सर्वे ते तं परितः कुतूहलेन स्थितवन्तः । उपस्थितान् बहून् श्रोतॄन् दृष्ट्वा नितरां सन्तुष्टः रङ्गः कथाकथनम् आरब्धवान् । किन्तु घण्टाभ्यन्तरे तत्परिसरे कोऽपि पिशाचः न अवशिष्टः । एतदनन्तरं द्वित्रेषु दिनेषु रात्रिकाले रङ्गः श्मशानं गत्वा पिशाचान् अन्विष्टवान् । किन्तु तं दूरात् एव दृष्ट्वा पिशाचाः पलायितवन्तः आसन् । 'रङ्गस्य कथातः पिशाचाः अपि भीताः भवन्ति' इति वदन्तः ग्रामे सर्वे उपहासं कृतवन्तः ।

अत्रान्तरे राजधान्यां महाराजं मारयितुं कश्चन प्रयत्नः प्रवृत्तः । भटैः कश्चन अपराधी गृहीतः अपि । बहुधा ताडितः पीडितः चापि सः कुतन्त्रस्य मूलपुरुषस्य नाम न उक्तवान् एव । वास्तविकः शत्रुः अज्ञातः एव अस्ति इत्यतः राजा नितरां खिन्नः । तदा कश्चित् सूचितवान् यत् रङ्गस्य कथा श्राविता चेत् प्रायः अपराधी रहस्यम् उद्घाटयेत् इति ।

''ताडनं पीडनं च बहुधा कृतं चेदपि अपराधी रहस्यं न उद्घाटितवान् । महती दृढ-मनस्कता तस्य । एवं स्थिते कथाश्रावणमात्रेण किं सः मुखम् उद्घाटयेत् ?'' इति पृष्टवान् राजा । तथापि रहस्यनिस्सारणार्थं मार्गान्तरं न आसीत् इत्यतः सः मन्त्रिणम् आदिष्टवान् यत् राजधानीं प्रति रङ्गस्य आनयनार्थं व्यवस्था क्रियताम् इति ।

राज्ञः सन्देशं प्राप्य रङ्गः नितरां सन्तुष्टः । 'मम कथां श्रोतुं कश्चन श्रोता लब्धः । बहुधा पीडनं प्राप्तवतः तस्य सहनाशक्तिः प्रवृद्धा अस्ति । रहस्यं न वक्तव्यम् इति चिन्तयन् सः कथमपि कथाम् आन्तं शृणुयात् एव' इति अचिन्तयत् सः ।

किन्तु तस्य चिन्तनानुगुणं न प्रवृत्तम् । घण्टां यावत् कथायाः श्रवणतः सः अपराधी श्रान्तः सन् रोदनम् आरब्धवान् । तस्य मनसः नियन्त्रणं शिथिलं जातम् । कुतन्त्रस्य

मूलकारणीभूतानां सर्वेषां नामानि सः सूचितवान् ।

एतस्मात् राजा नितरां सन्तुष्टः । सः रङ्गं सत्कृत्य सम्मानितवान् । सम्मानं प्राप्य अपि रङ्गः न सन्तुष्टः । सः राजानम् अवदत् – ''किम् एतेन सम्मानननेन ? यदि कोऽपि उत्तमः श्रोता मया प्राप्येत तर्हि एव मम सन्तोषः स्यात् । तत्काले यदि सम्माननं क्रियते तर्हि एव शोभा'' इति ।

राजा झटिति आज्ञां कृतवान् यत् रङ्गस्य कथाम् आन्तं श्रोतुं समर्थं जनं कञ्चित् अन्विष्यताम् इति । तदा मन्त्री अवदत् – ''महाराज ! दृढमनस्कः अपराधी अपि घण्टां यावत् कथां श्रुत्वा रोदनं कृतवान् । एवं स्थिते सामान्यानां का कथा ? अतः एतद्विषये ज्योतिषिकाणां मार्गदर्शनस्य प्राप्तिः एव लाभकरी'' इति ।

राजा आस्थानज्योतिषिकम् आनाय्य समस्यां निवेदितवान् । ज्योतिषिकः बहुधा विचिन्त्य अवदत् – ''महाराज ! मानवेषु कोऽपि तस्य कथाम् आन्तं श्रोतुं समर्थः न भवेत् । अतः भगवतः साहाय्यस्य प्राप्तिः एव श्रेयस्करी । रङ्गः स्वस्य कथां ताडपत्रेषु विलिख्य पठन् भगवते समर्पयतु । ततः सन्तुष्टः भगवान् प्रत्यक्षीभूय तदीयाम् इच्छां पूरयेत्'' इति ।

राजा रङ्गस्य निमित्तं समुचितं पूजास्थलं व्यवस्थाप्य ताडपत्राणां बन्धान् आनाय्य दत्तवान् । रङ्गः ज्योतिषिकस्य कथनस्य अनुगुणं कथां वदन् ताडपत्रे लिखित्वा भगवतः प्रतिमायाः पदतले समर्पयति स्म । अल्पे एव काले भगवान् प्रत्यक्षीभूय उक्तवान् – ''अलं कथालेखनेन । वदतु, भवान् किम् इच्छति ?'' इति ।



''भवतः दर्शनतः अहं धन्यः जातः । भवतः अनुग्रहतः यदि कोऽपि श्रोता प्राप्येत तर्हि अहम् उपकृतः स्याम्'' इति नमस्कार-भङ्ग्या उक्तवान् रङ्गः ।

तदा भगवान् मन्दहासपूर्वकम् उक्तवान् - ''वत्स ! सर्वस्य कार्यस्य कश्चन समयः भवति । कालो हि बलवत्तरः । कालस्य आवश्यकतानुगुणं सर्वे व्यवहाराः । त्रेतातः पूर्वं वामनावतारस्य सम्भवः न आसीत् यथा, द्वापरतः पूर्वं कृष्णावतारस्य यथा असम्भवः, तथैव योग्यसमयस्य प्राप्तितः पूर्वं भवतः कथायाः श्रोतुः प्राप्तिरपि न सम्भवा । श्रोतृप्राप्तिपर्यन्तं भवान् ताडपत्रेषु कथां लिखन् भवतु'' इति ।

''मम कथायाः श्रोता कदा प्राप्येत प्रभो ?'' इति विनयेन पृष्टवान् रङ्गः ।

''भवतः कथायाः एकः श्रोता न, अपि तु बहवः श्रोतारः प्राप्यन्ते । लक्षशः श्रोतारः यथा प्राप्ताः स्युः तथा अहं व्यवस्थां करिष्यामि । किन्तु तत् न इदानीम् । भवता विना प्रतिवचनं कथा लेखनीया । 'मम कथां शृणोतु' इति अहं न अभ्यर्थनीयः च'' इति अवदत् देवः ।

''भवान् यथा आदिशति तथैव करिष्यामि । किन्तु श्रोतुः प्राप्त्यर्थं मया कियत्-कालं प्रतीक्षा करणीया ? कृपया तत् वदतु'' इति पुनरपि भगवन्तं प्रार्थितवान् रङ्गः ।

''इतः कासाञ्चित् शताब्दीनाम् अनन्तरं भारतं विदेशीयशासनतः मुक्तिं प्राप्स्यति । ततः पञ्चाशद्वर्षाणि यदा अतीतानि भवन्ति तदा 'दूरदर्शन'नामकं यन्त्रं प्रायः गृहे गृहे भविष्यति । तच्च यन्त्रं भवता लिखितां कथां धारावाहिनीरूपेण प्रसार्य लक्षशः श्रोतॄन् रञ्जयिष्यति । तावत्पर्यन्तं भवता ताडपत्रेषु लिखिता कथा सुरक्षिततया यथा तिष्ठेत् तथा राजा व्यवस्थां करिष्यति । अतः इदानीं भवान् निश्चिन्ततया न केवलाम् एकाम्, अपि तु बह्वीः कथाः लिखतु । दूरदर्शनयन्त्रं ताः सर्वाः कानिचन वर्षाणि यावत् निरन्तरतया प्रसारयिष्यति'' इति उक्त्वा भगवान् अन्तर्हितः जातः ।

ताडपत्रेषु लिखिताः रङ्गेन लिखिताः ताः एव कथाः दूरदर्शनकेन्द्रैः आ बहुभ्यः दशकेभ्यः प्रसार्यमाणाः सन्ति ।





# ऐन्द्रजालिकस्य इच्छा

हेलापुर्याः भूस्वामी विनयशीलः । सः उदारः दयालुः च । कृषिविषये ग्रामीणानां विशेष-साहाय्यं करोति स्म सः । ग्रामजनाः सर्वेऽपि तम् आदरेण पश्यन्ति स्म ।

किन्तु समीपस्थेषु ग्रामेषु केचन तादृशाः जनाः आसन्, ये च तस्मै ईर्ष्यन्ति स्म । तम् अपमानितं कर्तुम् अवकाशं प्रतीक्षमाणाः भवन्ति स्म ते ।

एकस्मिन् दिने विनयशीलः स्वस्य आधीन्ये स्थितं सुगन्धपुरीग्रामं कैश्चित् प्रमुखजनैः सह गत्वा ग्रामीणानां हितस्य, समस्यानां च विषये चर्चां कुर्वन् आसीत् । तदा एव तत्र कश्चन ऐन्द्रजालिकः उपस्थितः । सः स्वकीयं परिचयम् उक्त्वा भूस्वामिनं प्रार्थितवान् यत् एतेषां पुरतः इन्द्रजालं प्रदर्शयितुम् अनुमतिः दातव्या इति । विनयशीलः अनुमतिं यच्छन् उक्तवान् - "अवश्यं दर्शयतु । तेन समस्याभारेण परिश्रान्ताः ग्रामीणाः किञ्चित् वा मनसः रञ्जनं प्राप्तुम् अर्हन्ति" इति ।

ऐन्द्रजालिकः कृतज्ञतां समर्पयन् इन्द्रजालस्य प्रदर्शनम् आरब्धवान् । इन्द्रजालप्रदर्शनसमाप्तेः अनन्तरं भूस्वामी उक्तवान् - "साधु ! जनानां मनोरञ्जनं सम्यक् एव कृतं भवता । अहं सन्तुष्टोऽस्मि । अतः अपेक्षितं याचतु" इति ।

"वचनस्य दानस्य अनन्तरं वचनात् विमुखता सर्वथा न शोभते । अतः अहं पृच्छामि - मम इच्छानुसारं, यत् अहं पृच्छामि तत् भवान् किं दातुं शक्नुयात् ?" इति ऐन्द्रजालिकः सन्देहेन अपृच्छत् ।

"कुतः सन्देहः भवतः ? दत्तात् वचनात् अहं कदापि विमुखः न भवामि" इति भूस्वामी उक्तवान् ।

"महाशय ! अहं भवन्तं केशरहित-शिरस्कतया, श्मश्रुहीनमुखतया च द्रष्टुम् इच्छामि । एषा एव मम अपेक्षा । एताम् अपेक्षां

पूर्णं करोतु इति प्रार्थना'' इति ऐन्द्रजालिकः हसन् उक्तवान् ।

तस्य एतादृशीं विचित्राम् अपेक्षां श्रुत्वा तत्रत्याः सर्वे आश्चर्येण स्तब्धाः । भूस्वामी अपि आश्चर्यचकितः किङ्कर्तव्यतामूढः च जातः । सः अचिन्तयत् - 'एतत् निश्चयेन मम विरोधिनां कार्यम् अस्ति' इति ।

दत्तं वचनं पालनीयम् एव आसीत् । किन्तु यदि ऐन्द्रजालिकस्य अपेक्षानुसारं भूस्वामी स्वस्य केशान्, श्मश्रु च कर्तयेत् तर्हि सः अपमानितः भवेत् ।

भूस्वामिनः एतादृशीं स्थितिं दृष्ट्वा ऐन्द्रजालिकः पुनः उक्तवान् - ''महोदय, दत्तं वचनं पालयितुं न शक्यते चेत् तदेव सर्वेषां पुरतः वदतु । भूस्वामी दत्तस्य वचनस्य पालने असमर्थः इति सर्वे जानन्तु नाम'' इति ।

''भोः अलं शाठ्येन । विलक्षणाम् अपेक्षां परित्यज्य सुवर्णमुद्रां, भूमिम्, ऐश्वर्यं वा याचतु । तत् अहं दास्यामि'' इति अवदत् भूस्वामी ।

''मम अन्या कापि अपेक्षा नास्ति । भवान् मम अपेक्षां पूरयितुं न शक्नोति चेत् न कापि चिन्ता मम, ततः भवतः एव अपमाननम् । जनाः वदन्ति यत् भूस्वामी वचनं दत्त्वा तस्मात् विमुखः जातः इति'' इति उक्तवान् ऐन्द्रजालिकः ।

भूस्वामिनः आप्तसचिवः विष्णुशर्मा एतत् सर्वं दूरात् पश्यन् आसीत् । स्थितिं दृष्ट्वा सः अनुक्षणं स्वस्थानात् उत्थितवान् । ऐन्द्रजालिकं - 'मया सह आगच्छतु' इति हस्तसङ्केतेन सूचितवान् । ऐन्द्रजालिकः मौनेन तस्य अनुसरणं कृतवान् । विष्णुशर्मा तं किञ्चिद्दूरं नीत्वा अल्पे एव काले प्रत्यानीतवान् ।

इदानीम् ऐन्द्रजालिकस्य शिरसि केशाः, मुखे श्मश्रु वा न आसन् । विष्णुशर्मा सर्वेषां पुरतः ऐन्द्रजालिकम् उक्तवान् - ''इदानीं केशरहितशिरस्कतया श्मश्रुहीनमुखतया च भवान् भूस्वामिनं पश्यतु । एषा एव खलु भवतः इच्छा आसीत् ?'' इति ।

प्रवृत्तं सर्वं दृष्ट्वा उपस्थिताः सर्वे हसितवन्तः । भूस्वामी दीर्घं निःश्वसितवान् । सः अपमानजनकस्थितेः रक्षणं कृतवतः विष्णुशर्मणः चातुर्यं बहुधा प्रशंसितवान्, यथोचितं पारितोषिकं दत्त्वा तं सत्कृतवान् च ।



### ५७. इरावतः मरणम्

# महाभारतम्

युद्धस्य सप्तमं दिनम् आरब्धम् । भीष्मः कौरवसेनां मण्डलव्यूहरूपेण सज्जीकृतवान् । धृतराष्ट्रपुत्रेषु अन्यतमः सहस्राधिकरथैः गजसेनया च सह भीष्मस्य रक्षकत्वेन स्थितवान् ।

कौरवपक्षस्य व्यूहरचनां दृष्ट्वा युधिष्ठिरः स्वसेनां वज्रव्यूहाकारेण सज्जीकृतवान् । युद्धस्य आरम्भे एव उभयपक्षीयाः अपि अन्यपक्षस्य व्यूहस्य भञ्जने उद्युक्ताः जाताः । द्रोण-विराटयोः, अश्वत्थाम-शिखण्डिनोः, दुर्योधन-धृष्टद्युम्नयोः च युद्धं प्रवृत्तम् । नकुल-सहदेवौ मातुलं शल्यं सम्मुखीकृतवन्तौ । अनेके कौरववीराः अर्जुनं, भीमं, कृतवर्माणं च सम्मुखीकृतवन्तः । अभिमन्युः धृतराष्ट्रपुत्रेण चित्रसेनेन सह युद्धम् आरब्धवान् । एवम् एव विकर्णः दुर्मर्षणेन सह, घटोत्कचः भगदत्तेन सह, अलम्बुसः सात्यकिना सह, भूरिश्रवाः धृष्टकेतुना सह, युधिष्ठिरः श्रुतायुषा सह च युद्धम् आरब्धवन्तः ।

अर्जुनेन सह युद्धं कुर्वन्तः स्थिताः कौरववीराः आदौ बाणवर्षणं कृतवन्तः । एतस्मात् क्रुद्धः अर्जुनः ऐन्द्रास्त्रप्रयोगं कृतवान् । एतस्मात् तेन सह युद्धं कुर्वाणाः सर्वे व्रणिताः जाताः । अनेके धीराः धराशायिनः अपि जाताः । अन्ते अनन्यगतिकाः कौरववीराः भीष्मं शरणं गतवन्तः ।

एवंरीत्या पलायनं कृत्वा आगतेषु सुशर्मा प्रमुखः आसीत् । दुर्योधनः सुशर्माणं प्रेरयन्





– ''भीष्मपितामहः प्राणापायम् अपि अविगणय्य अर्जुनेन सह युद्धं कुर्वन् अस्ति । भवन्तः सर्वेऽपि तस्य साहाय्यार्थं गच्छन्तु'' इति उक्तवान् ।

अर्जुनेन सह युद्धं कुर्वतः भीष्मस्य साहाय्यार्थम् अनेके कौरववीराः तत्र समागताः ।

अपरत्र विराटेन सह युद्धं कुर्वाणः द्रोणः विराटस्य सारथिम् अश्वान् च मारितवान् । तदा विराटः पुत्रस्य शङ्खस्य रथम् आरुह्य युद्धम् आरब्धवान् । द्रोणः एकेनैव बाणेन शङ्खं मारितवान् । इदं दृष्ट्वा विराटः रणरङ्गात् पलायनं कृतवान् । एवम् एव शिखण्डिना सह युद्धं कुर्वाणः अश्वत्थामा शिखण्डिनः सारथिम् अश्वान् च मारितवान् । तदा शिखण्डी खड्गम् आकृष्य अत्यन्तं कुशलतया शरीरस्य उपरि जायमानं बाणवर्षणं निवारयन् बाणानां नाशनम् आरब्धवान् । अन्ते शिखण्डिनः हस्ते विद्यमानः खड्गः छिन्नः । तदा शिखण्डी छिन्नं खड्गम् अश्वत्थाम्नः उपरि प्रक्षिप्य पलायनं कृतवान् ।

अन्यत्र अलम्बुसः सात्यकिना सह महता पराक्रमेण युद्धं कुर्वन् आसीत् । राक्षसः अलम्बुसः मायायुद्धम् आरब्धवान् । तदा सात्यकिः अर्जुनेन दत्तम् ऐन्द्रास्त्रं प्रयुक्तवान् । एतस्मात् बहुधा व्रणितः अलम्बुसः पलायनम् अकरोत् ।

धृष्टद्युम्नः दुर्योधनेन सह युद्धं कुर्वन् बाणवर्षणम् आरब्धवान् । ततः दुर्योधनः क्षतिग्रस्तः अभवत् । दुर्योधनस्य अश्वाः मृताः । दुर्योधनः खड्गं स्वीकृत्य रथात् उत्प्लुत्य धृष्टद्युम्नस्य उपरि आक्रमणं कृतवान् । तावता शकुनिः आगत्य दुर्योधनं स्वरथे उपवेश्य दूरं नीतवान् ।

कृतवर्मा भीमेन सह युद्धं कृतवान् । अस्मिन् युद्धे भीमः क्षतिग्रस्तः अभवत् । कृतवर्मा अपि क्षतिग्रस्तः अभवत् । सः श्यालस्य कृषकस्य रथम् आरूढवान् । एषा घटना दुर्योधनस्य समक्षे एव अभवत् । तदा भीमः कौरवसेनायाः उध्वस्थीकरणम् आरब्धवान् ।

उलूप्यर्जुनयोः पुत्रः विन्दानुविन्दाभ्यां सह युद्धं कुर्वन् बाणाघातं कृतवान् । विन्दानुविन्दयोः सैन्यम् अपि पलायनम् अकरोत् । घटोत्कच-भगदत्तयोः विचित्रं युद्धम् अभवत् । भगदत्तः एकं महागजम् आरुह्य पाण्डवसेनाम्

अस्तव्यस्तां कृतवान् । रक्षकं कमपि अपश्यन्ती पाण्डवसेना अपि पलायनं कर्तुम् उद्युक्ता । घटोत्कचः अपि विचित्ररीत्या अदृश्यतां गतः । तावता कौरवसेनायाम् अपि हाहाकारः आरब्धः । घटोत्कचः पुनः दृष्टिगोचरः अभवत् । सः भगदत्तस्य उपरि बाणवर्षणम् आरब्धवान् । भगदत्तः अपि बाणैः घटोत्कचं पीडितवान् । अन्ते श्रान्तः घटोत्कचः रणरङ्गात् पलायनं कृतवान् ।



नकुलसहदेवौ मातुलेन शल्येन सह युद्धं कुर्वन्तौ महावीरं तं मूर्च्छितं कृतवन्तौ । शल्यस्य सारथिः तस्य रथं दूरं नीतवान् । नकुल-सहदेवौ विजयिनौ सन्तौ सिंहनादं कृतवन्तौ । अतः कौरवाणां महती निराशा अभवत् । तावता मध्याह्नः जातः ।

अभिमन्युः धृतराष्ट्रपुत्रैः सह युद्धं कुर्वन् आसीत् । सः चित्रसेनस्य विकर्णस्य दुर्मर्षणस्य च रथं भञ्जितवान् । एतत् दृष्ट्वा कौरववीराः युगपत् अभिमन्योः उपरि आक्रमणम् आरब्धवन्तः । तदा झटिति अर्जुनः पुत्रस्य साहाय्यार्थम् उपस्थितः अभवत् । द्वयोः पक्षयोः भीकरं युद्धं प्रवृत्तम् । अर्जुनस्य अस्त्रैः शत्रवः पीडिताः अभवन् । सुशर्मणः अनेके बान्धवाः अर्जुनस्य बाणैः मरणं प्राप्तवन्तः । एतेन कुपितः सुशर्मा कैश्चित् योधैः सह अर्जुनस्य उपरि आक्रमणं कृतवान् । अर्जुनः तान् सर्वान् अपि पराजित्य भीष्मपितामहं सम्मुखीकर्तुम् अग्रे आगतवान् । मार्गे तेन दुर्योधन-सैन्धवादिभिः सह युद्धं करणीयम् अभवत् ।

यदा अर्जुनः भीष्मसमीपम् उपस्थितः तदा एव युधिष्ठिर-भीम-नकुल-सहदेवाः अपि तत्र आगताः । यद्यपि सर्वे पाण्डवाः उपस्थिताः आसन्, तथापि भीष्मं पीडयितुं ते न शक्ताः । तावता सैन्धवः आगत्य पाण्डवानां धनुषां नाशं कृतवान् । दुर्योधनः युधिष्ठिरस्य, नकुलस्य, सहदेवस्य च उपरि बाणप्रयोगं कृत्वा तान् पीडितवान् । शल्यादयः कौरव-दलस्य वीराः पाण्डवान् बहुधा पीडितवन्तः ।

तदा युधिष्ठिरः शिखण्डिनः समीपं गत्वा उक्तवान् - ''भीष्मवधः क्रियते इति भवता या प्रतिज्ञा कृता आसीत् सा स्मर्यते खलु ? पश्यतु तावत्, भीष्मः कथं दारुणं युद्धं कुर्वन् अस्ति इति । अहं चिन्तयामि यत् भवान् भीष्मं दृष्ट्वा भीतः इति । शीघ्रं गत्वा भीष्मवधं करोतु'' इति ।



एतानि वचनानि श्रुत्वा प्रेरितः शिखण्डी रोषाविष्टः सन् भीष्मेण सह युद्धं कर्तुम् उत्सुकः अभवत् । मार्गे शल्यः शिखण्डिनः उपरि अपि भीकरम् आग्नेयास्त्रं प्रयुक्तवान् । किन्तु शिखण्डी विचलितः न अभवत् । प्रत्युत्तररूपेण वारुणास्त्रं प्रयुक्तवान् शिखण्डी ।

तन्मध्ये भीष्मः युधिष्ठिरस्य धनुः भञ्जयित्वा ध्वजम् अपि भग्नं कृत्वा सिंहनादं कृतवान् । सिंहनादं श्रुत्वा युधिष्ठिरः अपि भीतः । भीमस्य पौरुषं जागरितम् अभवत् । सः गदां स्वीकृत्य सैन्धवस्य उपरि आक्रमणम् अकरोत् । सैन्धवः अपि भीमस्य उपरि बाणैः प्रहारम् आरब्धवान् । तथापि भीमः तत् उपेक्षमाणः सैन्धवस्य अश्वान् गदया प्रहृत्य मारितवान् । तदा दुर्योधनः भीष्मस्य उपरि आक्रमणम् अकरोत् । भीमः अपि गदया आक्रमणम् आरब्धवान् । गदायाः आत्मानं रक्षितुं सैनिकाः दुर्योधनम् एकाकिनं त्यक्त्वा पलायनम् अकुर्वन् । एवं भीमस्य गदाप्रहारतः आत्मानं रक्षितुं चित्रसेनः स्वस्य रथात् कूर्दनं कृतवान् । तस्य रथः ध्वस्तः अभवत् । 'कथञ्चित् आत्मानं भीमात् चित्रसेनः रक्षितवान् खलु' इति सर्वे चित्रसेनस्य अभिनन्दनं कृतवन्तः । अवसरं प्राप्य विकर्णः चित्रसेनं स्वरथे उपवेश्य पलायनं कृतवान् ।

किञ्चित्कालानन्तरं शिखण्डी भीष्मस्य पुरतः समुपस्थाय उच्चस्वरेण गर्जन् - ''तिष्ठतु'' इति अवदत् । किन्तु भीष्मः शिखण्डिना सह युद्धं न कृतवान् । सूर्यास्त-समयपर्यन्तं धृष्टद्युम्नः सात्यकिः च कौरव-सेनायाः उध्वस्तीकरणे निरतौ । तदा विन्दानुविन्दौ धृष्टद्युम्नस्य सम्मुखे आगत्य तस्य रथं भञ्जितवन्तौ । धृष्टद्युम्नः सात्यकेः रथम् आरूढवान् ।

तद्दिने युद्धसमाप्तितः पूर्वम् अर्जुनः सुशर्मादीन् पराजितवान् । भीमः दुर्योधनादीन् पराजितवान् । तदनन्तरं पक्षद्वयस्य अपि योधाः स्वशिबिरं प्रतिनिवृत्ताः । शिबिरप्रवेश-समनन्तरं ते शरीरे लग्नान् बाणान् निष्कास्य सम्यक् स्नानं कृतवन्तः । युद्धचर्चां परित्यज्य सङ्गीते, वाद्यवादने च मग्नाः अभवन् ।

परेद्यवि पक्षद्वस्य सैनिकाः युद्धार्थं सज्जाः अभवन् । व्यूह-प्रतिव्यूहयोः रचनानन्तरं आरम्भे एव भीष्मः रुद्ररूपधारणं कृतवान् इव आसीत् । तत् दृष्ट्वा युधिष्ठिरः प्रमुखान्

वीरान् भीष्मेण सह युद्धार्थं प्रेषितवान् ।

भीष्मः सोमकस्य, सृञ्जयस्य, पाञ्चालस्य च हननं कृतवान् । धैर्येण तस्य पुरतः स्थित्वा युद्धकरणे भीमः एकः एव समर्थः अभवत् । सः अपि रौद्रावतारेण भीष्मम् अतिशेते स्म । सः उग्ररूपं धृत्वा भीष्मस्य सारथिं हतवान् । भीष्मस्य रथः अपि युद्धभूमितः दूरं गतः । अन्ते भीष्मस्य साहाय्यार्थम् आगतः धृतराष्ट्रपुत्रः सुनाथः अपि भीमेन हतः ।

एतत् दारुणकृत्यं दृष्टवतः धृतराष्ट्रस्य इतरे सप्त पुत्राः आदित्यकेतुः, बह्वाशीः, कुण्डधरः, महोदरः, पण्डितकः, अपराजितः, विशालाक्षः च भीमेन सह युद्धं कर्तुं समागताः । भीमः तान् धृतराष्ट्रस्य सप्त पुत्रान् अपि बाणवर्षणेन हतवान् ।

भीमस्य भीषणकृत्येन दुर्योधनस्य इतरे सहोदराः भीताः । दुःखितः दुर्योधनः भीष्मसमीपं गत्वा - ''पितामह ! मम सहोदरान् सर्वान् भीमः मारयन् अस्ति । ते तु पराक्रमेण युद्धं कुर्वन्तः आसन् । तान् इतरान् चापि सः मृत्युमुखम् अप्रेषयत् । भवान् अस्मान् विशेषरूपेण परिगणयन् नास्ति । अतः मम मनसि द्वन्द्वम् आरब्धम् अस्ति'' इति उक्तवान् ।

दुर्योधनस्य वचनैः क्रुद्धः भीष्मः - ''किं भवान् एतं विषयं पूर्वं न जानाति स्म ? वयं सर्वे पूर्वमेव भवन्तं स्मारितवन्तः आस्म । भवतः सहोदरेषु यः कोऽपि भीमस्य पुरतः न गच्छेत् । यदि गच्छति तर्हि भीमः तान् निश्चयेन मारयति इति सर्वैः ज्ञायते स्म एव । एवं स्थिते अपि ते भीमेन सह युद्धार्थं गताः



यत् तत् तु तेषाम् एव दोषः । तस्य फलम् अपि प्राप्तं तैः । वस्तुतः भवान् मां द्रोणं च युद्धे प्रेरितवान् यत् तदेव अनुचितम् आसीत् । इतः परं भवन्तः स्वपराक्रमबलेन एव पाण्डवानां वधं कुर्वन्तु'' इति उक्तवान् ।

मध्याह्नपर्यन्तं युद्धं भीकररूपेण प्रवृत्तम् । भीकरं युद्धं कुर्वतः भीष्मस्य उपरि एककाले धृष्टद्युम्नः, सात्यकिः शिखण्डी च स्वसेनया सह आगत्य आक्रमणं कृतवन्तः । तथैव विराटः, द्रुपदः, सोमकः चापि सेनया सह तत् स्थलं प्राप्तवन्तः । तन्मध्ये केकयः, धृष्टकेतुः, कुन्तीभोजः च भीष्मस्य उपरि आक्रमणम् आरब्धवन्तः । अर्जुनः, उपपाण्डवाः, चेकितानः च इतरकौरववीरैः सह युद्धं कृतवन्तः । अभिमन्युः, भीमः,

घटोत्कचः च अन्यदिक्तः कौरवसेनाम् आक्रान्तवन्तः । एवं सर्वाभ्यः दिग्भ्यः कौरवसेनायाः विनाशः आरब्धः ।

कौरवसैन्येन अपि पाण्डवसैन्यस्य संहारः क्रियमाणः आसीत् । द्रोणः सामकं सृञ्जयं च हतवान् । भीमद्वारा पीडिताः कौरववीराः, द्रोणद्वारा पीडिताः पाण्डववीराः च हाहाकारं कुर्वन्तः आसन् ।

अतिभयङ्कररूपेण प्रवृत्ते एतस्मिन् युद्धे अर्जुनस्य पुत्रः इरावान् कौरवसेनां सम्मुखीकृतवान् ।

इरावतः माता नागराजस्य पुत्री । तस्याः पतिं गरुडः मारितवान् आसीत् । अतः पिता पुत्रीम् अर्जुनस्य समीपं प्रेषितवान् । सा अर्जुनं दृष्ट्वा मोहिता अभवत् । तयोः पुत्रः एव इरावान् । सः मात्रा सह एव वर्धमानः आसीत् । किन्तु तस्य पितृव्यः अश्वसेनः अर्जुनं द्विषति स्म । अतः अश्वसेनः इरावन्तं गृहात् निष्कासितवान् । तदा अर्जुनः इन्द्रलोके आसीत् । तत् ज्ञात्वा इरावान् इन्द्रलोकं गत्वा अर्जुनेन मिलितवान् । स्वजन्मवृत्तान्तं श्रावितवान् च । सकलविद्यासु स्वसमानं योग्यं पुत्रं दृष्ट्वा अर्जुनः अत्यन्तं प्रसन्नः अभवत् । 'युद्धसमये मम साहाय्यं करणीयम्' इति अर्जुनेन उक्तम् आसीत् । अतः इरावान् युद्धे पाण्डवानां साहाय्यं कर्तुम् उत्तमजातीयान् यवनदेशीयान् अश्वान् स्वीकृत्य उपस्थितः आसीत् ।

इरावान् स्वस्य अश्वसेनया सह कौरवसेनायाः उपरि आक्रमणं कृतवान् । तदा शकुनेः अनुजाः गजः, गवाक्षः, वृषभः, चर्मवान्, अर्जवः, शुकः च शकुनेः निराकृतिम् अविगणय्य इरावता सह युद्धं कर्तुम् उद्युक्ताः । ते सर्वे स्वबाणैः इरावन्तं घातयन्ति स्म । तदा इरावान् खड्गं स्वीकृत्य आत्मरक्षणं कुर्वन् वृषभम् एकं विहाय अन्यान् षड् जनान् हतवान् ।

इदं दृष्ट्वा दुर्योधनः इरावता सह योद्धुम् आर्षशृङ्गनामकं राक्षसं प्रेषितवान् । द्वयोः मध्ये अविरतं भीकरं युद्धं प्राचलत् । अन्ते क्षतिग्रस्तः इरावान् मूर्च्छितः अभवत् । तदा सः राक्षसः खड्गेन इरावतः शिरः कर्तितवान् । एतत् दृष्ट्वा कौरवसेनया हर्षनादः कृतः । एवं पाण्डवसेनायाः एकः योद्धा मारितः अभवत् ।





# विवाहसमस्या

वीरसत्त्वः हेलापुर्याः कश्चन धनिकः । तस्य एकः एव पुत्रः । सः अत्यन्तं सज्जनः चतुरः आकर्षकः च आसीत् । अतः तस्य पिता वीरसत्त्वः पुत्राय तदनुरूपां सुन्दरीं, सुशीलां, गृहकृत्येषु दक्षां वधूम् अन्विष्यन् आसीत् । तदर्थं सः स्वमित्रेषु परिचितेषु च विवाहयोग्याः कन्याः दृष्टवान् । काश्चन कन्याः सुशीलाः चतुराः तु आसन् । किन्तु न तावत्सुन्दर्यः । याः सुन्दर्यः भवन्ति तासां बुद्धिमत्ता प्रशस्ता न भवति स्म । अतः सः किं करणीयम् इति निर्णेतुम् असमर्थः अभवत् । पुत्रस्य विवाहः वीरसत्त्वस्य महत्यै समस्यायै अभवत् ।

कदाचित् रामचन्द्रनामकः वीरसत्त्वस्य बन्धुः तद्गृहम् आगतवान् । वीरसत्त्वः तस्मै पुत्रस्य विवाहसमस्यां विवृतवान् । तथैव- ''मया चिन्तितम् आसीत् यत् मम पुत्रस्य विवाहस्य निर्वर्तने कापि समस्या न भवेत्, सर्वाणि कार्याणि निर्विघ्नतया प्रवर्तेरन् इति । किन्तु तथा न प्रवृत्तम् एव । अतः किं करणीयम् इति न ज्ञायते । अहम् अत्यन्तं व्याकुलः अस्मि । एवं तु न स्यात् खलु यत् मया निर्णयस्वीकरणे दोषः आचरितः स्यात्'' इति खेदेन उक्तवान् वीरसत्त्वः ।

रामचन्द्रः किञ्चित्कालं विचिन्त्य - ''वरं कन्यां वा दृष्ट्वा वयं सहजतया अवगन्तुं शक्नुमः यत् ते 'सुन्दराः उत न' इति, 'स्वस्थाः उत न' इति च । किन्तु यदि वयं बुद्धिमत्तां परीक्षितुम् इच्छामः तर्हि अस्माभिः तेषां सम्भाषणं श्रोतव्यं, कार्यशैली च द्रष्टव्या । प्रायशः भवता अपि रूपं दृष्ट्वा, कांश्चन प्रश्नान् पृष्ट्वा च निर्णयः कृतः स्यात् ।

वस्तुतः अयं क्रमः दोषयुक्तः । अतः एव योग्यायाः वध्वाः अन्वेषणे भवान् क्लेशम् अनुभवन् अस्ति इति भाति मम'' इति उक्तवान् ।

वीरसत्त्वः रामचन्द्रस्य वचनेषु विद्यमानां वास्तविकताम् अङ्गीकृतवान् । परेद्यवि यदा रामचन्द्रः प्रस्थितः तदा सः वीरसत्त्वं प्रति - ''हाँ ! मया इदानीम् एकः विषयः स्मृतः । सुगन्धिपुरे बालकृष्णनामकः कश्चित् मम परिचितः अस्ति । तस्य एका विवाहयोग्या पुत्री अस्ति । कदाचित् तत्र गत्वा कन्यां दृष्ट्वा आगच्छतु । सा भवतः इष्टाय भवेत् कदाचित्'' इति उक्तवान् । अनन्तरं रामचन्द्रः बालकृष्णस्य पत्रसङ्केतमपि लिखित्वा दत्तवान् ।

सप्ताहानन्तरं वीरसत्त्वः सुगन्धिपुरं गतवान् । तत्र सः बालकृष्णस्य गृहम् अन्विष्यन् कस्यचित् गृहस्य पुरतः आगत्य स्थितवान् । तेन तत्रैव स्थातव्यम् अभवत् । यतः तस्य गृहस्य पुरतः पङ्कः बहु आसीत् । गतदिनेषु जातायाः महत्याः वृष्ट्याः कारणतः तत् स्थलं पङ्कमयं जातम् आसीत् । अन्यः मार्गः न आसीत् इत्यतः वीरसत्त्वः तेनैव मार्गेण बालकृष्णस्य गृहं प्राप्तवान् । तस्य पादौ पङ्कलिप्तौ आस्ताम् ।

द्वारे स्थितं वीरसत्त्वं दृष्ट्वा अन्तर्भागतः काचित् युवतिः तत्र आगता । तां दृष्ट्वा वीरसत्त्वः - ''पुत्रि, यदि भवती किञ्चिज्जलम् आनयेत् तर्हि पादौ प्रक्षालयेयम्'' इति अवदत् ।

तदा सा - ''जलम् आनयामि एव । किन्तु ततः पूर्वं भवान् वदतु यत् भवान् अस्माकं



गृहमेव आगतवान् उत न इति'' इति पृष्टवती ।

''एतत् बालकृष्णवर्यस्य गृहम् अस्ति खलु ?'' इति वीरसत्त्वः पृष्टवान् ।

''आम् । तस्यैव गृहम् एतत् । एतत् जलं स्वीकरोतु भवान् । पादौ प्रक्षाल्य अन्तः आगच्छतु । पिता अन्तः उपविष्टवान् अस्ति'' इति वदन्ती सा युवतिः पादप्रक्षालनार्थं जलं दत्तवती ।

वीरसत्त्वः पाणिपादं प्रक्षाल्य युवत्या दत्तेन प्रोञ्छेन मार्जयित्वा आसने उपविशन् तां पृष्टवान् - ''पादप्रक्षालनार्थम् अहं यदा जलं पृष्टवान् तदा भवती जलदानात् पूर्वमेव पृष्टवती यत् - भवान् मम गृहम् एव आगतवान् खलु इति । मम कथनानन्तरमेव भवत्या जलं दत्तम्, अपि च प्रोञ्छः अपि दत्तः । किम् अहं ज्ञातुं शक्नोमि यत् किमर्थं भवत्या एवम् आचरितम् इति ? भवत्याः व्यवहारेण तु अहं नितरां आश्चर्यचकितः अस्मि'' इति ।

वीरसत्त्वस्य प्रश्नं श्रुत्वा सा युवतिः - ''अत्र आश्चर्यं किमर्थम् ? मया भवान् इतःपूर्वं न दृष्टः । एतेन एकः विषयः तु स्पष्टः अस्ति यत् भवान् अस्माकं गृहजनानां कृते अपरिचितः इति । भवता अपेक्षितं गृहं यदि एतत् न स्यात् तर्हि भवान् अन्तः न आगमिष्यत् । मम पितरं द्रष्टुं आगतः यदि न स्यात् तर्हि मम जलदानं व्यर्थम् अभविष्यत् । यतः भवता तदा तेनैव पङ्कमार्गेण प्रतिगन्तव्यम् अभविष्यत्'' इति उक्तवती ।

युवत्याः तार्किकेन उत्तरेण वीरसत्त्वः विस्मितः अभवत् । युवत्या दत्तम् उत्तरं वास्तविकतां द्योतयति इति तेन अवगतम् आसीत् । मनसि एव सः निश्चितवान् यत् 'एषा एव मम स्नुषा भवितुम् अर्हति' इति । बालकृष्णेन सह विवाहविषयकवार्तालापार्थं वीरसत्त्वः सानन्दं अन्तः पदं स्थापितवान् ।



# चन्दमामा

# स्वपरम्परा अभिज्ञायताम्

एतस्मिन् अङ्के प्रकाशितायाः प्रश्नावल्याः उत्तरम् अग्रिमे अङ्के प्रकाशयिष्यते । तदभ्यन्तरे एतेषाम् उत्तरं स्वयं ज्ञात्वा भारतस्य प्राचीनपरम्पराम् अवगत्य ज्ञानं सुसमृद्धं क्रियताम् ।

## 1



अ. उत्तरभारतीयं तत् पवित्रस्थलं किं, यत्र च दक्षिणभारतीयाः अर्चकाः पूजादिकार्यं कुर्वन्ति ?

आ. दक्षिणभारतीयं तत् हिन्दुधर्मीयं स्थलं किं, यत्र च कस्यचित् मुस्लिमश्रद्धावतः श्रेष्ठतां पुरस्कृत्य मुस्लिम्-आचाराः पाल्यन्ते ?

इ. तत् मन्दिरं कुत्र अस्ति, यत्र श्रीकृष्णः भ्रातृभगिनीसमेतः पूज्यते ?

ई. मुनेः भारद्वाजस्य आश्रमः भारतस्य कस्मिन् प्रसिद्धे नगरे अस्ति ?

उ. यत्र भगवान् वेदव्यासः इतिहासग्रन्थं महाभारतं रचितवान् सा गुहा कुत्र अस्ति ?

## 2

कस्यचित् राज्ञः एकमात्रपुत्री सा सुन्दरी शूरा च । बहवः हितचिन्तकाः राजानं सूचितवन्तः यत् उत्तराधिकारित्वेन कस्यचित् बालकस्य दत्तकरूपेण स्वीकारः वरम् इति । किन्तु राज्ञः चिन्तनम् आसीत् यत् मम पुत्री वीरात् कस्माच्चित् अपि न अवरा, सा पुत्रः इव एव समर्थतया राज्यपालनं करिष्यति इति । राज्ञः मरणस्य अनन्तरं सा पुत्री सिंहासनम् आरूढवती । उत्तमतया एव राज्यपालनं कृतवती सा । किन्तु अल्पे एव काले तस्याः राज्यं स्वायत्तीकर्तुम् इच्छन्तः प्रतिवेशिनः विवाह-प्रस्तावं प्रेषितवन्तः । राजपुत्री तान् प्रस्तावान् निराकृतवती । अतः क्रुद्धाः ते प्रतिवेशिराजाः सम्भूय आक्रमणं कृतवन्तः । राजपुत्री धैर्येण तान् सम्मुखीकृतवती । सा अश्वम् आरुह्य खड्गं चालयन्ती शत्रून् संहरन्ती तेषां व्यूहम् एव प्रविष्टवती । तां परितः शत्रवः स्थितवन्तः । शत्रूणां शक्तिः अधिका । खड्गं भूमौ क्षिप्त्वा शरणागतिः प्रार्थनीया, उत प्राणाः त्यक्तव्याः इति सा यावत् चिन्तयन्ती आसीत् तावता कश्चन तरुणः तस्याः साहाय्यार्थम् आगतः । पूर्वं सः तस्याः परिणयम् इच्छन् आगतः आसीत् । साहाय्यं कृतवन्तं तं सा परिणीतवती । गच्छता कालेन जनैः ज्ञातं यत् राजकुमारी स्वयं देवी, तस्याः पतिश्च स्वयं शिवः इति । भारतस्य कस्मिंश्चित् मन्दिरे तयोः पूजा अद्यापि प्रचलति ।

तच्च मन्दिरं कुत्र अस्ति ? राजपुत्र्याः नाम किम् ? तौ कयोः देवीदेवयोः प्रतीकरूपौ ?



चन्दमामायाः प्रस्तुतिः

# परोपकारी समीरः

चित्रम् - पाणिः

## कपटसंन्यासिनः निग्रहणम्




जलं पीत्वा गतः समीरः एकत्र सुप्तवान् प्रातः उत्थितः सः कुत्रचित् गच्छतः ग्रामीणान् अपश्यत् । तेन पृष्टाः जनाः अवदन् - ''वयं कस्यचित् संन्यासिनः दर्शनार्थं गच्छन्तः स्मः .....''
''ग्रामे चौर्यम् आधिक्येन प्रचलत् अस्ति । चौर्यस्य अवरोधार्थं वयं संन्यासिनं प्रार्थयिष्यामः । सः अस्मान् रक्षिष्यति ।'' संन्यासिविषये सन्देहगन्धः आघ्रातः समीरेण । अतः सः तान् अनुसृतवान् ।
''जय शाम्भवि ! वत्स ! किम् इच्छति भवान् ?''
सः अवदत् - ''विवाहेच्छा मम''
संन्यासिनं शिष्यः कश्चन किमपि अवदत् ।
भवतः इच्छा पूर्णा भविष्यति । विवाहम् अहं निर्वर्तयिष्यामि
अनुगृहीतोऽस्मि ।


''भक्ताः ! अहं चौर्यविषये देवताभिः सह वार्तालापं कृतवान् । ताः चोरेभ्यः भवतः सर्वान् रक्षिष्यन्ति । अग्रिमशुक्रवासराभ्यन्तरे तासाम् अनुग्रहः भविष्यति । निश्चिन्ताः सन्तः प्रतिगच्छन्तु भवन्तः'' इति अवदत् संन्यासी । जनाः संन्यासिनः आश्वासनं प्राप्य निश्चिन्ततया प्रतिगताः । समीरः गभीरचिन्तने निमग्नः ।
सर्वेषां निर्गमनस्य अनन्तरं समीरस्य बुद्धिः वेगेन कार्यम् अकरोत् ।
तस्यां रात्रौ सः शिलायाः कस्याश्चित् पृष्ठतः उपविश्य संन्यासिनः व्यवहारं परिशीलितवान् । दृढकायाः त्रयः चोरितवस्तूनां ग्रन्थिम् उन्नीय संन्यासिनः समीपम् आगच्छन्तः तेन दृष्टाः ।
ते त्रयः ग्रन्थिस्थानि आभरणानि धनं च संन्यासिने दर्शितवन्तः ।
समीरः ततः ग्रामं गतवान् ।
''संन्यासिनः दर्शनार्थं हिमालयतः केचन महात्मानः आगच्छन्ति । तेषां वासादि-व्यवस्था करणीया । अतः भवन्तः कुद्दालखनित्रादीनि गृहीत्वा आगच्छन्तु ।''
कुद्दालखनित्रादीनि गृहीत्वा जनाः समीरम् अनुसरन्तः संन्यासिसमीपम् आगताः । एतत् दृष्ट्वा संन्यासी आश्चर्य-चकितः भीतः च ।
गुरुवर्य ! अद्य वयं गृहीताः !!


''भवतः पापघटः पूर्णः । भवन्तं सजीवं गर्ते स्थापयितुं सर्वे आयुध-सहितम् आगताः सन्ति ।''
किमर्थम् ? किं कृतं मया ?
''मुग्धान् ग्रामीणान् इतोऽप्यग्रे अपि वञ्चयितुं न अर्हति भवान्'' इति वदन् समीरः संन्यासिनः जटां श्मश्रु च आकृष्टवान् । संन्यासिनः वास्तविकं रूपं प्रकटितं जातम् ।
जनाः कपटसंन्यासिनं सम्यक् ताडितवन्तः । कपटसंन्यासितः प्राप्तानि आभरणानि तत्तत्स्वामिभ्यः दत्तवान् समीरः ।
कपटसंन्यासिनं तच्छिष्यान् च यथायोग्यं दण्डितान् कारयित्वा समीरः स्वशुनकेन सह अन्यग्रामं गतवान् ।


THE AMUL CHEESE BOY
IN PICNIC PANIC
One bright sunny day...
...a picnic is in progress.
Little Munnu Verma crawls away.
GURGLE
Suddenly, huge rocks come tumbling down the mountain.
RUMBLE
Amul cheese boy eats an Amul cheese slice...
...and becomes strong and powerful.
He smashes the falling rocks...
BANG
...reducing them to small pieces.
CRACK
All thanks to the cheese that has more milk in it.
Munnu is rescued and back with his family.
Amul cheese slices.
Amul cheese. Yes please!
Amul

# लुण्ठाकवार्ता

परन्धामः कश्चन सामान्यः कृषिकः । कदाचित् तस्य पुत्र्याः विवाहः निश्चितः । सः पुत्र्याः विवाहनिमित्तं बन्धून् निमन्त्रयन् उक्तवान् यत् महिलाः अमूल्यानि आभरणानि धृत्वा विवाहं प्रति न आगच्छेयुः, यतः मद्ग्रामे लुण्ठाकभीतिः महती अस्ति इति ।

निश्चिते मुहूर्ते विवाहः सम्पन्नः । बान्धवमहिलाः अमूल्याभरणधारणं विनैव विवाहे भागं गृहीतवत्यः । सर्वाः आनन्देन परस्परं वार्तालापं कुर्वत्यः दिनानि यापितवत्यः ।

विवाहानन्तरं सर्वाः प्रतिगतवत्यः । प्रतिगमनात् पूर्वं काचित् महिला परन्धामं पृष्टवती - ''ग्रामीणानां द्वारा मया ज्ञातं यत् ग्रामे लुण्ठाकेभ्यः भीतिः काऽपि नास्ति इति । तथापि भवान् तादृशभीतेः सत्तां वदन् - 'आभरणं धृत्वा मा आगच्छन्तु' इति किमर्थम् अस्मान् सूचितवान् ?'' इति ।

तदा परन्धामः हसन् ताम् उक्तवान् - ''मम बान्धवेषु धनिकाः निर्धनाः चापि सन्ति बहवः । धनिककुलीयाः महिलाः निर्धनमहिलानां पुरतः आभरणधारणपुरस्सरं सञ्चरन्त्यः धनिकत्वगर्वं न प्रदर्शयेयुः, एवम् एव निर्धनमहिलाः धनिकमहिलाभ्यः न ईर्ष्येयुः इति मम इच्छा आसीत् । यदा धनिकनिर्धनभेदः न भवति तदा एव परस्परं मैत्र्या व्यवहरन्त्यः जल्पनं कर्तुं शक्नुवन्ति महिलाः । अतः लुण्ठाकाः सन्ति इति वार्ता मया प्रसारिता । एतेन मम इष्टं विनायासं सिद्धम्'' इति ।





# अङ्गरक्षकः

पूर्वं कदाचित् शिवगिरिराज्यस्य राजा वीरभद्रः एकम् अङ्गरक्षकं चेतुम् इष्टवान् । अतः तेन उद्घोषणा कारिता । तत् पदम् अपेक्ष्य बहवः तरुणाः आगताः । ते सर्वे दृढकायाः, शूराः, युद्धनिपुणाः च । 'एतेषु योग्यः जनः भवता चेतव्यः' इति राजा मन्त्रिणम् आदिष्टवान् ।

मन्त्री सर्वेषां परीक्षां कृतवान् सावधानतया । अन्ते गजसेनः उग्रशक्तिः च तेन चितौ । तौ उभौ अपि समानशक्ति-गुण-चातुर्यवन्तौ आस्ताम् । 'तयोः कतरः चेतव्यः' इति तेन निर्णेतुं न शक्तम् ।

अतः सः राजानं सर्वम् उक्तवान् - "प्रभो, एतौ उभौ अपि पराक्रमेण, विद्यया च समानौ । अङ्गरक्षकत्वं प्राप्तुम् उभयोः अपि समाना अर्हता अस्ति । एतयोः कतरः चेतव्यः इति निर्णेतुं मया न शक्तम् । अतः भवान् एव एतयोः अन्यतरं परीक्ष्य चिनोति चेत् वरम्" इति ।

"अस्तु । तत् चयनम् अहं करिष्यामि । एतत् पदम् अपेक्ष्य बहवः तरुणाः उपस्थिताः खलु ? किं ते कार्योपयोगिनः न भवेयुः ? तेषां विषये किं चिन्तनं भवतः ?" इति अपृच्छत् राजा ।

"ते सर्वे शूराः योग्याः च युवकाः । सर्वे सेनायां नियुक्तिम् अर्हन्ति । केचन तु दलनायकपदे एव नियुक्तिम् अपि अर्हन्ति । केषाञ्चित् किञ्चित् प्रशिक्षणम् आवश्यकम् । तथापि सर्वे देशकार्ये उपयोगिनः स्युः एव" इति उक्तवान् मन्त्री ।

"युक्तम् एतत् । तेषां तरुणानां नियुक्त्यादिविषये भवान् एव चिन्तयतु । श्वः अहं पर्वताञ्चले स्थितम् उद्यानवनं गच्छन् अस्मि । मया सह अङ्गरक्षकत्वेन गजसेनम् उग्रशक्तिं वा प्रेषयतु" इति आदिष्टवान् राजा ।

अनन्तरदिने राजा उग्रशक्तिः च सूर्योदयात् पूर्वम् एव अश्वम् आरुह्य पर्वताञ्चलीयम्

उद्यानवनं प्रति प्रस्थितवन्तौ । उग्रशक्तिः खड्गं, धनुः, शूलं च धृत्वा अङ्गरक्षणकार्यार्थं पूर्णतः सिद्धः जातः आसीत् ।

उद्यानवनप्रदेशं प्राप्य राजा विश्रान्तिकुटीरे उपविष्टवान् । तावता केचन ग्रामीणाः धावन्तः तत्र आगत्य - ''महाप्रभो, वयं विपत्तिगर्ते पतिताः स्मः । एकः घोरव्याघ्रः अस्माकं ग्रामं प्रविष्टवान् अस्ति । अजाः, मेषाः, अन्ये केचन पशवः च तेन मारिताः । सः यदाकदाचित् अपि अस्मान् अपि मारयितुम् अर्हति । अतः समग्रे ग्रामे भययुक्तः परिसरः प्रसृतः दृश्यते । सर्वे द्वारं पिधाय गृहस्य अन्तः भीत्या स्थिताः सन्ति । गृहात् बहिः कोऽपि न आगच्छति । वयं तु कथञ्चित् आत्मानं रक्षन्तः धावन्तः अत्र आगताः स्मः । कृपया तस्मात् व्याघ्रतः वयं रक्षणीयाः । अन्यथा अस्माकं ग्रामः अचिरात् एव जनशून्यः भवेत्'' इति दैन्येन प्रार्थितवन्तः ।

तदा राजा उग्रशक्तिं पश्यन् आदिष्टवान् - ''उग्रशक्ते, एतैः ग्रामीणैः सह गत्वा तं व्याघ्रं मारयतु'' इति ।

''प्रभो ! भवतः आज्ञा शिरोधार्या मम । एतस्य अल्पस्य कार्यस्य निमित्तं धनुःखड्गादीनां न आवश्यकता । शूलमात्रेण तम् अहं मारयिष्यामि'' इति उक्त्वा ततः निर्गतवान् उग्रशक्तिः ।

घण्टानन्तरं प्रत्यागतः सः महाराजम् अवदत् - ''प्रभो, मया बहुधा अन्विष्टम् । किन्तु ग्रामे व्याघ्रः कुत्रापि न दृष्टः । प्रायः सः अरण्यं प्रतिगतवान् स्यात्'' इति ।



राजा शिरः चालयन् मौनम् आश्रितवान् । सूर्यास्तसमये तौ राजधानीं प्रति गतवन्तौ ।

सप्ताहानन्तरं राजा पुनरपि तदेव उद्यानवनं प्रति प्रस्थितवान् । एतदवसरे तेन गजसेनः अङ्गरक्षकत्वेन नीतः । पूर्ववत् एव एतस्मिन् अपि काले केचन ग्रामीणाः धावन्तः आगत्य व्याघ्रागमनवार्तां निवेद्य महाराजं प्रार्थितवन्तः यत् यदि सः व्याघ्रः न मार्येत तर्हि समग्रः ग्रामः विनष्टः स्यात् इति ।

राजा गजसेनम् आज्ञापितवान् यत् भवान् एतैः सह गत्वा क्रूरव्याघ्रं मारयित्वा आगच्छतु इति । किन्तु गजसेनः ततः न निर्गतवान् ।

तदा राजा क्रोधेन पृष्टवान् - ''किं मम आज्ञा न श्रुता ? किमर्थं न गतं भवता ?'' इति ।

गजसेनः विनयेन उक्तवान् – ''प्रभो क्षन्तव्यः अहम् । भवन्तम् अत्र एकाकिनं कृत्वा गन्तुं न अर्हामि अहम् । ग्रामीणाः राजधानीं गत्वा मन्त्रिवर्यम् उक्त्वा साहाय्यं प्राप्नुवन्तु नाम । अहं भवतः अङ्गरक्षकः अस्मि । भवतः रक्षणं मम आद्यं कर्तव्यम्'' इति ।

''एतेषां सर्वेषां पुरतः किं भवान् मम आज्ञां तिरस्करोति ? राजाज्ञायाः तिरस्कारः महते दोषाय इति किं भवान् न जानाति ? एतस्य अपराधस्य निमित्तं कीदृशः दण्डः प्राप्यते इति किं भवता ज्ञायते ?'' इति क्रोधेन उक्तवान् राजा ।

''भवतः आज्ञां पालयितुं न शक्नोमि यत् तदर्थम् अहं पुनरपि क्षमां याचे । भवतः रक्षणैकवृत्तिकः अहम्'' इति विनयेन निर्भीकतया च उक्तवान् गजसेनः ।

राजा किमपि उत्तरं न उक्तवान् । 'अहं राजधानीं प्रतिगत्य यथोचितव्यवस्थां कारयिष्यामि' इति संसूच्य ग्रामीणान् प्रेषितवान् सः ।

राजधानीं प्रत्यागतः सः मन्त्रिणम् आहूय उद्याने प्रवृत्तं घटनाद्वयम् अपि विस्तरेण निवेद्य – ''गजसेनः अङ्गरक्षकपदे नियुक्तः भवतु । उग्रशक्तिः सेनायां यथोचितपदे नियुक्तिं प्राप्नोतु'' इति उक्तवान् ।

राज्ञः निर्णयस्य विषये आश्चर्यं प्रकटयन् मन्त्री पृष्टवान् – ''प्रभो, गजसेनेन भवतः आज्ञा धिक्कृता । नियमः न पालितः । तथापि सः किमर्थम् अङ्गरक्षकपदे नियोज्यते भवता ?'' इति ।

तदा राजा मन्दहासपूर्वकम् उक्तवान् – ''सः मम आज्ञायाः पालनं न कृतवान् इति तु सत्यम् एव । मरणदण्डनम् अपि सम्भवेत् इति सः जानाति स्म अपि । तथापि सः स्वकर्तव्यपालनविषये अविचलः स्थितः । स्वस्य प्राणापायपरिस्थितौ अपि राज्ञः रक्षणम् एव अङ्गरक्षकस्य आद्यं कर्तव्यम् । तत् कर्तव्यं सम्यक् एव निरूढवान् अस्ति गजसेनः । अतः सः एव अङ्गरक्षकपदे नियुक्तिम् अर्हति । उग्रशक्तिः धीरः साहसी च, किन्तु बुद्धिमान् न'' इति ।

एवं गजसेनः अङ्गरक्षकपदे नियुक्तिं प्राप्तवान् ।



# पुरस्कारदानम्

चन्द्रनगरस्य राजा सुन्दरवर्मा । तस्य पुरस्कारदाने अत्युत्साहः । लघुना कारणेन अपि सः पुरस्कारं ददाति । यदा तेन वार्धक्यं प्राप्तं तदा एषा प्रवृत्तिः पूर्वापेक्षया द्विगुणिता अभवत् । मन्त्री सदा महाराजस्य पार्श्वे तिष्ठन् महाराजस्य अतिदानं निवारयति स्म ।

एकदा राजा मन्त्रिणा सह उद्याने विहरन् आसीत् । सेवकाः अपि तेन सह आसन् । तदा महाराजः कश्चित् नूतनं पक्षिणं दृष्टवान् । तत्क्षणे एव भटद्वारा तं पक्षिणं बन्धयित्वा आनायितवान् । "एतस्य पक्षिणः नाम किम् ?" इति पृष्टवान् च । तदा एकः अग्रे आगत्य - "प्रभो ! नूतनपक्षी किल एषः ? अतः कोऽपि नाम न जानाति । नामविषये पक्षी एव प्रष्टव्यः" इति ।

"योग्या सूचना" इति सन्तोषं प्रकटयन् राजा तस्मै हस्ते स्थितं सुवर्णकङ्कणं पुरस्कार-रूपेण दत्तवान् । पक्षिणं नामविषये पृष्टवान् च ।

पक्षिणः मुखात् उत्तरं किमपि न आगतम् । तदा अन्यः - "महाप्रभो ! पक्षी बधिरः मूकः वा स्यात् । अतः उत्तरं दातुं न शक्नोति" इति उक्तवान् ।

एतेन सन्तुष्टः राजा अन्यस्मै अपि एकं कङ्कणं दत्तवान् । तदा उत्साहिताः अन्ये अपि सेवकाः पक्षिणः विषये सर्वज्ञाः इव व्यवहरन्तः किमपि किमपि उक्त्वा पुरस्कारं प्राप्तुं प्रवृत्ताः । 'एवं चेत् महाराजस्य सर्वाणि आभरणानि एते अपहरन्ति' इति चिन्तयित्वा मन्त्री सेवकं संज्ञया सूचितवान् - 'पक्षिणं त्यजतु' इति ।

पक्षी यदा उड्डीय गतः तदा महाराजः व्याकुलितः जातः । तदा मन्त्री पृष्टवान् - "प्रभो ! पक्षिणः नाम वयं न जानीमः । स्वयं पक्षी स्वनाम न वदति । एतादृशेन पक्षिणा किं प्रयोजनम् ? तस्य उड्डयनम् एव वरं किल ?" इति ।

"मन्त्रिवर्य ! माणिक्यसदृशं वचनम् उक्तवान् भवान्" इति परमसन्तोषं प्रकटयन् राजा स्वकण्ठे स्थितं रत्नहारं मन्त्रिणः कण्ठे स्थापितवान् ।





# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?
समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**





**युक्ता शीर्षिका डिसेम्बर् - २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका फेब्रवरी - २००१ मासे प्रकाशयिष्यते ।**

## अभिनन्दनानि



**'अक्टोबर्'मासीयस्पर्धाशीर्षिकाप्रेषिका-**
**कु॰ रामसुजाता वि. आर्.**
२६० ३/८, २ मुख्यमार्गः, २ उपमार्गः
एम्. सि. सि. 'ए' ब्लाक्
दावणगेरे -५७७ ००४



*प्रथमचित्रम्* - **बाल ! त्वं किं प्राप्तुमिच्छसि ?**
*द्वितीयचित्रम्* - **भ्रातर्दूरे किं नु पश्यसि ?**

**चन्दमामायाः वार्षिकं ग्राहकशुल्कं -**
**भारते रू. १२० - ००**

Payment in favour of CHANDAMAMA INDIA LIMITED. For details address your enquires to:
New 82 (old 92), Defence Officers Colony, Ekkatuthangal, Chennai - 600 097.



MILLENNIUM OFFER
GOODIES for KIDDIES
चन्दामामा
Avail our
Special Gift Offer
before January 1, 2001
A DASH! watch free with
3-year subscription to
CHANDAMAMA
AVAILABLE IN 12 LANGUAGES
Remit Rs. 360/- by Draft or M.O favouring
Chandamama India Limited
to:
Publication Division,
Chandamama India Limited,
82, Defence Officers' Colony,
Guindy Industrial Estate P.O., Chennai 600 032.
E-mail: chandamama@vsnl.com
FREE
The models shown here are only indicative.
DASH!
Wow watches from Titan
Offer valid on 3-year subscriptions within India and till stocks last. Conditions apply.

